

नम सिद्धेभ्य

# ॥ पञ्चाध्यायी ॥

पञ्चाध्यायावयवं मम कर्तुर्ग्रन्थराजमात्मवशात् ॥
अर्थालोकनिदानं यस्य वचस्तं स्तुवे महावीरम् ॥ १ ॥
शेषानपि तीर्थकराननन्तसिद्धानहं नमामि समम् ॥
धर्माचार्याध्यापकसाधुविशिष्टान्मुनीश्वरान्वन्दे ॥ २ ॥
जीयाज्जैनं शासनमनादिनिधनं सुवन्द्यमनवद्यम् ॥
यदपि च कुमतारातीनदयं धूमध्वजोपमं दहति ॥ ३ ॥
इति वन्दितपञ्चगुरुः कृतमङ्गलसत्क्रियः स एष पुनः ॥
नाम्ना पञ्चाध्यायीं प्रतिजानीते चिकीर्षितं शास्त्रम् ॥४॥
अत्रान्तरङ्गहेतुर्यद्यपि भावः कवेर्विशुद्धतरः ॥
हेतोस्तथापि हेतुः साध्वी सर्वोपकारिणी बुद्धिः ॥ ५ ॥
सर्वोऽपि जीवलोकः श्रोतुकामो वृषं हि सुगमोक्त्या ॥

सप्रतिपक्षा भवति हि स्वप्रतिपक्षेण नेतरेणेह ॥ १५ ॥
अत्राहैव कश्चित्सत्ता या सा निरकुशा भवतु ॥
परपक्षे निरपेक्षा स्वात्मनि पक्षेऽवलम्बिनी यस्मात् १६
तन्न यतो हि विपक्षः कश्चित्सत्त्वस्य वा सपक्षोऽपि ॥
द्वावपि नयपक्षौ तौ मिथो विपक्षौ विवक्षितापेक्षात् १७
अत्राप्याह कुदृष्टिर्यदि नयपक्षौ विवक्षितौ भवत ॥
का नः क्षतिर्भवेतामन्यतरेणेह सत्त्वसंसिद्धिः ॥ १८ ॥
तन्न यतो द्रव्यार्थिकपर्यायार्थिकनयात्मक वस्तु ॥
अन्यतरस्य विलोपो शेषस्यापीह लोप इति दोष ॥१९॥
प्रतिपक्षमसत्ता स्यात्सत्तायास्तद्यथातथा चान्यात् ॥
नानारूपत्व किल प्रतिपक्ष चैकरूपतायास्तु ॥ २० ॥
एकपदार्थस्थितिरिह सर्वपदार्थस्थितेर्विपक्षत्वम् ॥
ध्रौव्योत्पादविनाशैस्त्रिलक्षणायास्त्रिलक्षणाभावः ॥२१॥
एकस्यास्तु विपक्षः सत्तायाः स्याददो ह्यनेकत्व ॥
स्यादप्यनन्तपर्ययप्रतिपक्षस्त्वेकपर्ययत्व स्यात् ॥ २२ ॥
एकस्मिन्निह वस्तुन्यनादिनिधने च निर्विकल्पे च ॥
भेदनिदान किं तद्येनैतज्जृम्भते वचस्त्विति चेत् ॥२३॥
अशविभागः स्यादित्यखण्डदेशे महत्यपि द्रव्ये ॥

विशेषां तस्य कृतं-नन्वस्मदुक्तं पृथग्भावात् ॥ ६ ॥
सति धर्मिणि धर्माणां मीमांसा स्यादनन्यथा न्याय्यात् ॥
साध्यं वस्त्वविशिष्टं धर्मविशिष्टं ततः परं चापि ॥ ७ ॥
तत्त्वं सल्लक्षणिकं सन्मात्रं वा यतः स्वतः सिद्धम् ॥
तस्मादनादिनिधनं स्वसहायं निर्विकल्पं च ॥ ८ ॥
इत्थं नोचेदसतः प्रादुर्भूतिर्निरंकुशा भवति ॥
परतः प्रादुर्भावो युतसिद्धत्वं सतो विनाशो वा ॥ ९ ॥
असतः प्रादुर्भावे द्रव्याणामिह भवेदनन्तत्वम् ॥
को वारयितुं शक्तः कुम्भोत्पत्तिं मृदाद्यभावेऽपि ॥ १० ॥
परतः सिध्दत्वे स्यादनवस्थालक्षणो महान् दोषः ॥
सोऽपि परः परतः स्यादन्यस्मादिति यतश्च सोऽपि परः
युतसिद्धत्वेऽप्येवं गुणगुणिनोः स्यात्पृथक्प्रदेशत्वम् ॥
उभयोरात्मसमत्वाल्लक्षणभेदः कथं तयोर्भवति ॥ १२ ॥
अथवा सतो विनाशः स्यादिति पक्षोऽपि बाधितो भवति
[illegible] ह्य युक्तेः प्रतीयतेऽध्यक्षात् ॥ १३ ॥
तस्मादनेकदूषणदूषितपक्षाननिच्छता पुंसा ॥
[illegible]पनामुक्तलक्षणमिह तत्त्वं चानुमन्तव्यम् ॥ १४ ॥
एवं भूताऽपि च सत्ता न स्यान्निरंकुशा किन्तु ॥

एकत्र तत्र देशे भवितुं शीलो न सर्वदेशेषु ॥ ११ ॥
तदसत्प्रमाणबाधितपक्षत्वादक्षसविदुपलब्धेः ॥
देहैकदेशविषयस्पर्शादिह सर्वदेशेषु ॥ १४ ॥
प्रथमेतरपक्षे खलु यः परिणामः स सर्वदेशेषु ॥
एको हि सर्वपर्वसु प्रकम्पते ताडितो वेणुः ॥ १५ ॥
एकप्रदेशवदपि द्रव्यं स्यात्खण्डवर्जितः स यथा ॥
परमाणुरेव शुद्धः कालाणुर्वा यथा स्वतः सिध्दः ॥ १६
न स्याद्द्रव्य क्वचिदपि बहुप्रदेशेषु खण्डितो देशः ॥
तदपि द्रव्यमिति स्यादखण्डितानेकदेशमदः ॥ १७ ॥
अथ चैव ते प्रदेशाः सविशेषाद्रव्यसञ्ज्ञया भणिताः ॥
अपि च विशेषाः सर्वे गुणसञ्ज्ञास्ते भवन्ति यावन्तः १८
तेषामात्मा देशो न हि ते देशात्पृथक्त्वसत्ताकाः ॥
न हि देशे हि विशेषाः किन्तु विशेषैश्च तादृशो देशः १९
अत्रापि च सन्दृष्टिः शुक्लादीनामियं तनुस्तन्तुः ॥
न हि तन्वी शुक्लाद्याः किन्तु सिताद्यैश्च तादृशस्तन्तुः ४०
अथ चेद्भिन्नो देशो भिन्ना देशाश्रिता विशेषाश्च ॥
तेषामिह संयोगाद्द्रव्यं दण्डीव दण्डयोगाद्वा ॥ ४१ ॥
नैव हि सुलभ्यदरदोषत्वाद्वा सुसिध्दहष्टान्तात् ॥

तत्कि चेतनयोगादचेतन चेतन न स्यात् ॥ ४२ ॥
अथवा विना विशेषै प्रदेशसत्त्व कथ प्रमीयेत ॥
अपि चान्तरेण दर्शविशेषलक्षणाऽप्यलक्ष्यते च कथम् ॥४३॥
अथ चैतयो पृथक्त्वे हठादहेतोश्च मन्यमानेऽपि ॥
कथमिव गुणगुणिभाव प्रमीयते सत्समानत्वात् ॥ ४४॥
तस्मादिदमनवद्य देशविशेषास्तु निर्विशेषास्ते ॥
गुणसञ्ज्ञका कथञ्चित्परिणतिरूपा पुन क्षण यावत् ॥
एकत्व गुणगुणिनो साध्य हेतोस्तयोरनन्यत्वात् ॥
तदपि द्वैतमिव स्यात्किं तत्र निरन्वन मिति चेत् ॥४६ ॥
यत्किञ्चिदस्ति वस्तु स्वत स्वभावे स्थित स्वभावश्च ॥
अविनाभावी नियमाद्विवक्षितो भेदकर्त्ता स्यात् ॥ ४७ ॥
शक्तिर्लक्ष्मविशेषो धर्मो रूपं गुण स्वभावश्च ॥
प्रकृतिः शील चाकृतिरेकार्थवाचका अमी शब्दाः ॥४८॥
देशस्यैका शक्तिर्या काचित्सा न शक्तिरन्या स्यात् ॥
क्रमतो वितर्क्यमाणा भवन्त्यनन्ताश्च शक्तयो व्यक्ता ॥४९॥
स्पर्शो रसश्च गन्धो वर्णो युगपद्यथा रसालफले ॥
प्रतिनियतेन्द्रियगोचरचारित्वात्ते भवन्त्यनेकेऽपि ॥ ५० ॥
तदुदाहरण चैतज्जीवे यद्दर्शन गुणश्चैक ॥

तत्र ज्ञानं न सुखं चारित्रं वा न कश्चिदितरश्च ॥ ५१ ॥
एवं यः कोऽपि गुणः सोऽपि च न स्यात्तदन्यरूपो वा ॥
स्वयमुच्छलन्ति तदिमा मिथो विभिन्नाश्च शक्तयोऽनन्ताः ॥
तासामन्यतरस्या भवन्त्यनन्ता निरंशका अंशाः ॥
तरतमभागविशेषैरंशच्छेदैः प्रतीयमानत्वात् ॥ ५३ ॥
दृष्टान्तः सुगमोऽयं शुक्लं वासस्ततोऽपि शुक्लतरम् ॥
शुक्लतमं च ततः स्यादंशाश्चैते गुणस्य शुक्लस्य ॥ ५४ ॥
अथवा ज्ञानं यावज्जीवस्यैको गुणोऽप्यखण्डोऽपि ॥
सर्वजघन्यनिरंशच्छेदैरिव खण्डितोऽप्यनेकः स्यात् ॥५५॥
देशच्छेदो हि यथा न तथा छेदो भवेद्गुणांशस्य ॥
विष्कम्भस्य विभागात्स्थूलो देशस्तथा न गुणभागः ॥
क्रमोपदेशश्चायं प्रवाहरूपो गुणः स्वभावेन ॥
अर्द्धच्छेदेन पुनश्छेत्तव्योऽपि च तदर्द्धछेदेन ॥ ५७ ॥
एवं भूयोभूयस्तदर्द्धछेदैस्तदर्द्धछेदैश्च ॥
यावच्छेत्तुमशक्यो यः कोऽपि निरंशको गुणांशः स्यात्
तेन गुणांशेन पुनर्गणिताः सर्वे भवन्त्यनन्तास्ते ॥
तेषामात्मा गुण इति न हि ते गुणतः पृथक्त्वसत्ताकाः ॥
अपि चांशः पर्यायो भागो हारो विधा प्रकारश्च ॥

तत्किं चेतनयोगादचेतनं चेतनं न स्यात् ॥ ४२ ॥
अथवा विना विशेषैः प्रदेशसत्त्वं कथं प्रमीयेत ॥
अपि चान्तरेण दशैविशेषलक्ष्माऽवलक्ष्यते च कथम् ॥४३॥
अथ चैतयोः पृथक्त्वे हठादहेतोश्च मन्यमानेऽपि ॥
कथमिव गुणगुणिभावः प्रमीयते सत्समानत्वात् ॥ ४४ ॥
तस्मादिदमनवद्यं देशविशेषास्तु निर्विशेषास्ते ॥
गुणसञ्ज्ञकाः कथञ्चित्परिणतिरूपाः पुनःक्षणं यावत् ॥
एकत्वं गुणगुणिनोः साध्यं हेतोस्तयोरनन्यत्वात् ॥
तदपि द्वैतमिव स्यात्किं तत्र निबन्धनं स्थिति चेत् ॥४६ ॥
यत्किञ्चिदस्ति वस्तु स्वतः स्वभावे स्थितं स्वभावश्च ॥
अविनाभावी नियमाद्विवक्षितो भेदकर्त्ता स्यात् ॥ ४७ ॥
शक्तिर्लक्ष्मविशेषो धर्मो रूपं गुणः स्वभावश्च ॥
प्रकृतिः शीलं चाकृतिरेकार्थवाचका अमी शब्दाः ॥४८॥
देशस्यैका शक्तिर्या काचित्सा न शक्तिरन्या स्यात् ॥
॥ नियमः ॥ भुवस्त्व ... ॥ ४९ ॥
स्पर्शो र... भवति भवति निरंशं गुणाशकं द्रव्यम् ॥
... भवति न परिणामि वा भवेत्क्षणिकं
... भवन्त्वनन्ता निरंशः ...

तन्न ज्ञानं न सुखं चारित्रं वा न कश्चिदितरश्च ॥ ५१ ॥
एवं यः कोऽपि गुणः सोऽपि च न स्यात्तदन्यरूपो वा ॥
स्वयमुच्छलन्ति तदिमा मिथो विभिन्नाश्च शक्तयोऽनन्ता ॥
तासामन्यतरस्या भवन्त्यनन्ता निरंशका अंशाः ॥
तरतमभागविशेषैरंशच्छेदैः प्रतीयमानत्वात् ॥ ५३ ॥
दृष्टान्तः सुगमोऽयं शुक्लं वासस्ततोऽपि शुक्लतरम् ॥
शुक्लतमं च ततः स्यादंशाश्चैते गुणस्य शुक्लस्य ॥ ५४ ॥
अथवा ज्ञानं यावज्जीवस्यैको गुणोऽप्यखण्डोऽपि ॥
सर्वजघन्यनिरंशच्छेदैरिव खण्डितोऽप्यनेकः स्यात् ॥५५॥
देशच्छेदो हि यथा न तथा छेदो भवेद्गुणांशस्य ॥
विष्कम्भस्य विभागात्स्थूलो देशस्तथा न गुणभागः ॥
कमोपदेशश्चायं प्रवाहरूपो गुणः स्वभावेन ॥
अर्द्धच्छेदेन पुनश्छेत्तव्योऽपि च तदर्द्धछेदेन ॥ ५७ ॥
एवं भूयोभूयस्तदर्द्धछेदैस्तदर्द्धछेदैश्च ॥
... कोऽपि निरंशको गुणांशः स्यात्
इदमस्ति यथा मूलं स्कन्धः शाखा दलानि पु[illegible] ॥
गुच्छाः फलानि सर्वाण्येकात्मापादात्मको वृक्षः ॥ ७७ ॥
यद्यपि भिन्नोऽभिन्नो दृष्टान्तः कारकश्च भवतीह ॥

आद्यन्तयाऽप्यभिन्न' साध्ये चास्मिन्गुणात्मके द्रव्ये॥७८॥
भिन्नोऽप्यथ दृष्टान्तो भिन्नौ चित्र यथा दर्वीः घटे ॥
भिन्न कारक इति वा कश्चिध्दनवान्धनस्य योगेन ॥ ७९ ॥
दृष्टा तथाभिन्ने वृक्षे शाखा यथा ग्रहे स्तम्भ. ॥
अपि चाभिन्नः कारक इति वृक्षोऽथ यथा हि शाखावान् ॥
समवायः समवायी यदि वा स्यात्सर्वथा तदेकार्थ ॥
समुदायो वक्तव्यो न चापि समवायिवा॑गिति चेत् ॥ ८१ ॥
तन्न यत' समुदायो नियत समुदायिन. प्रतीतत्वात् ॥
व्यक्तप्रमाणसाधितसिध्दित्वाद्वा सुसिध्ददृष्टान्तात् ॥ ८२
स्पर्शरसगन्धवर्णा लक्षणभिन्ना यथा रसालफले ॥
कथमपि हि पृथक्कर्तु न तथा शक्यास्त्वखण्डदेशत्वात् ॥८३
अत एव यथा वाच्या देशगुणांशा विशेषरूपत्वात् ॥
वक्तव्य च तथा स्यादेक द्रव्य त एव सामान्यात् ॥८४ ॥
अथैतदेव लक्षणमेकं वाक्यान्तरप्रवेशेन ॥
निष्पत्तिप्रविपत्त्यै विशेषतो लक्षयन्ति बुधाः ॥ ८५ ॥
उत्पादस्थितिभङ्गैर्युक्त सद्द्रव्यलक्षण हि यथा ॥
एतैरेव समस्तै. पृक्त सिध्देत्सम न तु व्यस्तै. ॥ ८६ ॥
अयमर्थ. प्रकृतार्थो ध्रौव्योत्पादव्ययास्त्रयश्चांशाः ॥

नाम्ना सदिति गुणः स्यादेकोऽनेके त एकशः प्रोक्ताः ॥
लक्ष्यस्य लक्षणस्य च भेदविवक्षाश्रयात्सदेव गुणः ॥
द्रव्यार्थादेशादिह तदेव सदिति स्वयं द्रव्यम् ॥ ८८ ॥
वस्त्वस्ति स्वतःसिद्धं यथा तथा तत्स्वतश्च परिणामि ॥
तस्मादुत्पादस्थितिभंगमयं सदेतदिह नियमात् ॥ ८९ ॥
न हि पुनरुत्पादस्थितिभंगमयं तद्विनाऽपि परिणामात् ॥
असतो जन्मत्वादिह सतो विनाशस्य दुर्निवारत्वात् ॥९०
द्रव्यं ततः कथञ्चित्केनचिदुत्पद्यते हि भावेन ॥
व्येति तदन्येन पुनर्नैतद्द्वितयं हि वस्तुतया ॥ ९१ ॥
इह घटरूपेण यथा प्रादुर्भवतीति पिण्डरूपेण ॥
व्येति तथा युगपत्स्यादेतद्द्वितयं नमृत्तिकात्वेन ॥ ९२ ॥
ननु ते विकल्पमात्रमिह यदकिञ्चित्कर तदेवेति ॥
एतावताऽपि न गुणो हानिर्वा तद्विना यतस्त्विति चेत् ॥
तन्न यतो हि गुणः स्यादुत्पादादित्रयात्मके द्रव्ये ॥
तन्निह्नवे च न गुणः सर्वद्रव्यादिशून्यदोषत्वात् ॥ ९४ ॥
परिणामाभावादपि द्रव्यस्य स्यादनन्यथावृत्तिः ॥
तस्यामिह परलोको न स्यात्कारणमथापि कार्यं वा ९५
परिणामिनोऽप्यभावात्क्षणिकं परिणाममात्रमिति वस्तु ॥

तन्न यतो[illegible] मनीनित्वात् ॥९६॥
गुणपर्ययवद्द्रव्यं [illegible] पूर्वम् ॥
यावद्यातरोपदे [illegible] चेत् ॥ ९७ ॥
तन्न यत [illegible] धर्मधीर्दीरिव ॥
अन्यतर स्यादिति चेन्न [illegible] ॥ ९८ ॥
तदर्शनं यथा किल नित्यत्वस्य च गुणस्य [illegible] स्यात् ।
गुणवद्द्रव्यं च स्यादित्युक्ते ध्रौव्यवस्तुन [illegible] ॥९९॥
अपि च गुणाः संलक्ष्यास्तेषामिह लक्षण भवेद् [illegible] ॥
तस्माल्लक्ष्य [illegible] लक्षणमिह साधन मिति [illegible] १००
पर्यायाणामिह किल भङ्गोत्पादव्ययस्य वा [illegible]
इत्युक्ते पर्ययवद्द्रव्य सृष्टिव्ययात्मकं वा स्यात् ॥ १ ॥
द्रव्यस्थानीया इति पर्यायाः स्युः स्वभाववन्तश्च ॥
तेषां लक्षणमिव वा स्वभाव इव वा पुनर्व्ययोत्पादम् ॥
अथ च गुणत्व किमहो सूक्त केनाऽपि जन्मिना सूरिः ॥
प्रोचे सोदाहरण लक्षितमिव लक्षण गुणाना हि ॥ ३ ॥
द्रव्याश्रया गुणा स्युर्विशेषमात्रास्तु निर्विशेषाश्च ॥
करतलगत यदेतैर्व्यक्तमिवालक्ष्यते वस्तु ॥ ४ ॥
अयमर्थो विदितार्थः समप्रदेशाः सम विशेषा ये ॥

ते ज्ञानेन विभक्ताः क्रमतः श्रेणीकृता गुणा ज्ञेयाः ॥५॥
दृष्टान्तः शुक्लाद्या यथा हि समनन्तरः सर्वं सन्ति ॥
बुध्या विभज्यमानाः क्रमतः श्रेणीकृता गुणा ज्ञेयाः ॥६॥
नित्यानित्यविचारस्तेषामिह विद्यते ततः प्रायः ॥
विप्रतिपत्तौ सत्यां विवदन्ते वादिनो यतो बहवः ॥ ७ ॥
जैनानां मतमेतन्नित्यानित्यात्मकं यथा द्रव्यम् ॥
ज्ञेयास्तथा गुणा अपि नित्यानित्यात्मकास्तदेकत्वात् ॥८॥
तत्रोदाहरणमिद किल तद्भावान्वयाद्गुणा नित्याः ॥
तदभिज्ञानात्सिध्द तल्लक्षणमिह यथा तदेवेदम् ॥ ९ ॥
ज्ञानं परिणामि यथा घटस्य चाकारतः पटाकृत्या ॥
किं ज्ञानत्वं नष्टं न नष्टमथ चेत्कथं न नित्यं स्यात् ॥१०॥
दृष्टान्तः किल वर्णो गुणो यथा परिणमन्नसालफले ॥
हरितात्पीतस्तत्किं वर्णत्वं नष्टमिति नित्यम् ॥ ११ ॥
वस्तु यथा परिणामि तथैव परिणामिनो गुणाश्चापि ॥
तस्मादुत्पादव्ययद्वयमपि भवति हि गुणानां तु ॥१२॥
ज्ञानं गुणो यथा स्यान्नित्य सामान्यवत्तयाऽपि यतः ॥
नष्टोत्पन्नं च तथा घटं विहायाथ पटं परिच्छिन्दत् १३
सन्दृष्टी रूपगुणो नित्यश्चाम्रेऽपि वर्णमात्रतया ॥

ाष्ट्रोत्पन्ने हरितात्परिणममानश्च पीतवत्त्वेन ॥ १४ ॥
ननु नित्या हि गुणा अपि भवन्त्यनित्यास्तु पर्यया. सर्वे
तत्किं द्रव्यवदिह किल नित्यानित्यात्मका गुणा' प्रोक्ता
सत्य तत्र यत स्यादिदमेव विवक्षित यथा द्रव्ये ॥
न गुणेभ्य. पृथगिह तत्सदिति द्रव्य च पर्ययाश्चेति १६
अपि नित्याः प्रतिसमय विनाऽपि यत्न हि परिणमति गुणा
स च परिणामोऽवस्था तेषामेव न पृथक्त्वसत्ताकः १७
ननु तदवस्थो हि गुण किल तदवस्थान्तर हि परिणामः
उभयोरन्तर्वर्तित्वादिह पृथगेतदेवमिदमिति चेत् ॥१८॥
तन्न मत' सदवस्था सर्वा आम्रेडित यथा वस्तु ॥
न तथा ताभ्य पृथगिति किमपि हि सत्ताकमन्तर वस्तु
नियत परिणामित्वादुत्पादव्ययमया य एव गुणाः ॥
टङ्कोत्कीर्णन्यायात्त एव नित्या यथास्वरूपत्वात् ॥ २० ॥
न हि पुनरेकेषामिह भवति गुणानां निरन्वयो नाशः ॥
अपरेषामुत्पादो द्रव्य यत्तद्द्वयाधारम् ॥ २१ ॥
दृष्टान्ताऽऽभासोऽय स्याद्वि विपक्षस्य मृत्तिकायां हि ॥
एके नश्यन्ति गुणा जायन्ते पाकजा गुणास्त्वन्ये ॥ २२
तत्रोत्तरमिति सम्यक् सत्यां तत्र च तथाविधायां हि ॥

किं पृथिवीत्वं नष्टं न नष्टमथ चेत्तथा कथं न स्यात् २३
ननु केवलं प्रदेशाद्द्रव्यं देशाश्रया विशेषास्तु ॥
गुणसञ्ज्ञका हि तस्माद्भवति गुणेभ्यश्च द्रव्यमन्यत्र ॥ २४
तत एव यथा सुघटं भङ्गोत्पादध्रुवत्रयं द्रव्ये ॥
न तथा गुणेषु तत्स्यादपि च व्यस्तेषु वा समस्तेषु २५
तन्न यतः क्षणिकत्वापत्तेरिह लक्षणाद्गुणानां हि ॥
तदभिज्ञानविरोधात्क्षणिकत्वं बाध्यतेऽध्यक्षात् ॥ २६ ॥
अपि चैवमेकसमये स्यादेकः कश्चिदेव तत्र गुणः ॥
तन्नाशादन्यतरः स्यादिति युगपन्न सन्त्यनेकगुणाः २७
तदसधतः प्रमाणदृष्टान्तादपि च बाधितः पक्षः ॥
स यथा सहकारफले युगपद्वर्णादिविद्यमानत्वात् ॥ २८
अथ चेदिति दोषभयान्नित्याः परिणामिनस्त इति पक्षः॥
तत्किं स्यान्न गुणानामुत्पादादित्रयं समं न्यायात् ॥ २९
अपि पूर्वं च यदुक्तं द्रव्यं किल केवलं प्रदेशाः स्युः ॥
तत्र प्रदेशवत्त्वं शक्तिविशेषश्च कोऽपि सोऽपि गुणः ३०
तस्माद्गुणसमुदायो द्रव्यं स्यात्पूर्वसूरिभिः प्रोक्तम् ॥
अयमर्थः खलु देशो विभज्यमाना गुणा एव ॥ ३१ ॥
ननु चैवं सति नियमादिह पर्याया भवन्ति यावन्तः ॥

सर्वे गुणपर्याया वाच्या न द्रव्यपर्यया' केचित् ॥ १२ ॥
तत्र यतोऽस्ति विशेषः सति च गुणानां गुणत्वत्त्वेऽपि ॥
चिदचिद्यथा तथा स्यात्क्रियावती शक्तिरथ च भाववती
तत्र क्रियाप्रदेशो देशपरिस्पन्दलक्षणो वा स्यात् ॥
भावः शक्तिविशेषस्तत्परिणामोऽथ वा निरंशांशैः १४
यतरे प्रदेशभागास्ततरे द्रव्यस्य पर्यया नाम्ना ॥
यतरे च विशेषांशास्ततरे गुणपर्यया भवन्त्येव ॥ १५ ॥
तत एव यदुक्तचरं व्युच्छेदादित्रयं गुणानां हि ॥
अनवद्यमिदं सर्वं प्रत्यक्षादिप्रमाणसिध्दत्वात् ॥ १६ ॥
अथ चैतल्लक्षणमिह वाच्यं वाक्यान्तरप्रवेशेन ॥
आत्मा यथा चिदात्मा ज्ञानात्मा वा स एव चैकार्थ' १७
तद्वाक्यान्तरमेतद्यथा गुणाः सहभुवोऽपि चान्वयिनः ॥
अर्थाच्चैकार्थत्वादर्थादेकार्थवाचकाः सर्वे ॥ १८ ॥
सह सार्धं च समं वा तत्र भवन्तीति सहभुवः प्रोक्ताः ॥
अयमर्थो युगपत्ते सन्ति न पर्यायवत्क्रमात्मानः ॥ १० ॥
ननु सह समं मिलित्वा द्रव्येण च सहभुवो भवन्तिति चेत्
तन्न यतो हि गुणेभ्यो द्रव्यं पृथगिति यथा निषिद्धत्वात्
ननु चैवमतिव्याप्तिः पर्यायेष्वपि गुणानुषङ्गत्वात् ॥

पर्यायः पृथगिति चेत्सर्वं सर्वस्य दुर्निवारत्वात् ॥ ४१ ॥
अनुरित्यव्युच्छिन्नप्रवाहरूपेण वर्तते यद्वा ॥
अयतीत्ययगत्यर्थाद्धातोरन्वर्थतोऽन्वय द्रव्यम् ॥ ४२ ॥
सत्ता सत्त्व सद्वा सामान्यं द्रव्यमन्वयो वस्तु ॥
अर्थो विधिरविशेषादेकार्थवाचका अमी शब्दाः ॥ ४३ ॥
अयमन्वयोऽस्ति येषामन्वयिनस्ते भवन्ति गुणवाच्याः ॥
अयमर्थो वस्तुत्वात्स्वतः सपक्षा न पर्ययापेक्षाः ॥ ४४ ॥
ननु च व्यतिरेकित्व भवतु गुणाना सदन्वयत्वेऽपि ॥
तदनेकत्वप्रसिद्धौ भावव्यतिरेकतः सतामिति चेत् ॥४५॥
तन्न यतोऽस्ति विशेषो व्यतिरेकस्यान्वयस्य चापि यथा ॥
व्यतिरेकिणो ह्यनेकेऽप्येकः स्यादन्वयी गुणो नियमात् ॥
स यथा चैको देशः स भवति नान्यो भवति स चाप्यन्यः ॥
सोऽपि न भवति स देशो भवति स देशश्च देशव्यतिरेकः ॥
अपि यश्चैको देशो यावदभिव्याप्य वर्तते क्षेत्रम् ॥
तत्तत्क्षेत्र नान्यद्भवति तदन्यश्च क्षेत्रव्यतिरेकः ॥ ४८ ॥
अपि चैकस्मिन्समये यकाऽप्यवस्था भवेन्न साऽप्यन्या ॥
भवति च सापि तदन्या द्वितीयसमयेऽपि कालव्यतिरेकः ॥
भवति गुणांशः कश्चित्स भवति नान्यो भवति स चाप्यन्यः

सोऽपि न भवति सदन्यो भवति तदन्योपि भावव्यतिरेकः
यदि पुनरेकं न स्यात्स्यादपि चैवं पुनः पुनः सैषः ॥
एकाशदेशमात्रं सर्वं स्यात्तन्न बाधितत्वात्साद् ॥ ९१ ॥
अयमर्थः पर्याया' प्रत्येकं किल यथैकशः प्रोक्ताः ॥
व्यतिरेकिणो ह्यनेकेन तथाऽनेकत्वतोऽपि सन्ति गुणाः ॥
किन्त्वेषशः स्वबुद्धौ ज्ञानं जीवः स्वसर्वसारेण ॥
अथ चैकशः स्वबुद्धौ दृग्वा जीवा स्वसर्वसारेण ॥९३॥
तत एव यथाऽनेके पर्याया सैष नेति लक्षणतः
व्यतिरेकिणश्च न गुणास्तथेति सोऽय न लक्षणाभावात् ॥
तल्लक्षणं यथा स्याज्ज्ञानं जीवो य एव तावॉश्च ॥
जीवो दर्शनमिति वा तदभिज्ञानात्स एव तावॉश्च ॥९५॥
एष क्रमः सुखादिषु गुणेषु वाच्यो गुरूपदेशाद्वा ॥
यो जानाति स पश्यति सुखमनुभवतीति स एव हेतोश्च ॥
अथ चोद्दिष्ट प्रागप्यर्थो इति सञ्ज्ञया गुणा वाच्याः
तदपि न रूढिवशादिह किन्त्वर्थाद्यौगिकं तदेवेति ९७॥
स्यादृगताविति धातुस्तद्रूपोऽयं निरुच्यते तज्ज्ञैः ॥
अत्यर्थोऽनुगतार्थादनादिसन्तानरूपतोऽपि गुणः ॥ ९८ ॥
अयमर्थः सन्ति गुणा अपि किल परिणामिनः स्वतः सिद्धाः

नित्यानित्यत्वादप्युत्पादादित्रयात्मकाः सम्यक् ॥ ५९ ॥
अस्ति विशेषस्तेषां सति च समाने यथा गुणत्वेऽपि ॥
साधारणास्त एके केचिदसाधारणा गुणाः सन्ति ॥ ६०
साधारणास्तु यतरे ततरे नाम्ना गुणा हि सामान्याः ॥
ते चासाधारणका यतरे ततरे गुणा विशेषाख्याः ॥ ६१
तेषामिह वक्तव्ये हेतुः साधारणैर्गुणैर्यस्मात् ॥
द्रव्यत्वमस्ति साध्यं द्रव्यविशेषस्तु साध्यते त्वितरैः॥६२
सन्दृष्टिः सदिति गुणः स यथा द्रव्यत्वसाधको भवति ॥
अथ च ज्ञानं गुण इति द्रव्यविशेषस्य साधको भवति ॥
उक्तं हि गुणानामिह लक्ष्यं तल्लक्षणं यथाऽऽगमतः ॥
सम्प्रति पर्यायाणां लक्ष्यं तल्लक्षणं च वक्ष्यामः ॥ ६४ ॥
क्रमवर्तिनो ह्यनित्या अथ च व्यतिरेकिणश्च पर्यायाः ॥
उत्पादव्ययरूपा अपि च ध्रौव्यात्मकाः कथञ्चिच्च ॥ ६५
तत्र व्यतिरेकित्वं प्रायः प्रागेव लक्षितं सम्यक् ॥
अवशिष्टविशेषमितः क्रमतः संलक्ष्यते यथाशक्ति ॥ ६६
अस्त्यत्र यः प्रसिद्धः क्रम इति धातुश्च पादविक्षेपे ॥
क्रमति क्रम इति रूपस्तस्य स्वार्थानतिक्रमादेषः ॥ ६७
वर्तन्ते ते नयतो भवितुं शीलास्तथा स्वरूपेण ॥

यदि वा स एव वर्ती येषां क्रमवर्तिनस्त एवार्थात् ६८
अयमर्थः प्रागेक जात समुच्छिद्य जायते चैक' ॥
अथ नष्टे सति तस्मिन्नन्योऽप्युत्पद्यते यथा देश. ॥ ६९
ननु यत्रास्ति स भेद' शब्दकृतो भवतु वा तदेकार्थात् ॥
व्यतिरेकक्रमयोरिह को भेदः पारमार्थिकस्त्विति चेत् ७०
तन्न यतोऽस्ति विशेष' सदृशधर्मे द्वयोः समानेऽपि ॥
स्थूलेष्विव पर्यायेष्वन्तर्लीनाश्च पर्यया. सूक्ष्मा' ॥ ७१ ॥
तत्र व्यतिरेकः स्यात्परम्पराभावलक्षणेन यथा ॥
अशविभाग' पृथगिति सदृशाशानां सतामेव ॥ ७२ ॥
तस्माद्व्यतिरेकित्व तस्य स्यात्स्थूलपर्ययः स्थूलः ॥
सोऽय भवति न सोऽय यस्मादेतावतैव ससिद्धि. ॥७३॥
विष्कम्भक्रम इति वा क्रमः प्रवाहस्य कारण तस्य ॥
न विवक्षितमिह किञ्चित्तत्र तथात्व किमन्यथात्व वा ७४
क्रमवर्तित्व नाम व्यतिरेकपुरस्सर विशिष्ट च ॥
स भवति भवति न सोऽय भवति तथाऽथ च तथा न भवतीति ॥ ७५ ॥
ननु तत्र किं प्रमाण क्रमस्य साध्ये तदन्यथात्वे हि ॥
सोऽय य. प्राक्स तथा यथेति य. प्राक्तु निश्चयादिति चेत्

अयमर्थः परिणामि द्रव्यं नियमाद्यथा स्वतःसिद्धम् ॥
प्रतिसमय परिणमते पुनःपुनर्वा यथा प्रदीपशिखा ७७
इदमस्ति पूर्वपूर्वभावविनाशेन नश्यतोऽशस्य ॥
यदि वा तदुत्तरोत्तरभावोत्पादेन जायमानस्य ॥ ७८ ॥
तत्र यतः प्रत्यक्षादनुभवविषयात्तथाऽनुमानाद्वा ॥
स तथेति च नित्यस्य न गयेत्यनित्यस्य प्रतीतत्वात् ७९
तदिद यथा स जीवो देवो मनुजाद्भवन्नथाप्यन्यः ॥
कथमन्यथात्वभाव न लभेत स गोरसोऽपि नयात् ॥ ८०
ननु चैव सत्यसदपि किञ्चिद्वा जायते सदेव यथा ॥
सदपि विनश्यत्यसदिव सदृशासदृशत्वदर्शनादिति चेत्
सदृशोत्पादो हि यथा स्यादुष्णः परिणमन् यथा वह्निः॥
स्यादित्यसदृशजन्मा हरितात्पीत यथा रसालफलम् ८२
नैव यत स्वभावादसतो जन्म न सतो विनाशो वा ॥
उत्पादादित्रयमपि भवति च भावेन भावतया ॥ ८३ ॥
अयमर्थः पूर्वं यो भावः सोऽप्युत्तरत्र भावश्च ॥
भूत्वा भवन भावो नष्टोत्पन्नो न भाव इह कश्चित् ८४
दृष्टान्तः परिणामी जलप्रवाहो य एव पूर्वस्मिन् ॥
उत्तरकालेऽपि तथा जलप्रवाहः स एव परिणामी ८५

यत्तत्र विसदृशत्व जातेरनतिक्रमात्क्रमादेव ॥
अवगाहनगुणयोगाद्देशांशाना सतामेव ॥ ८६ ॥
दृष्टान्तो जीवस्य लोकासख्यातमात्रदेशा' स्यु. ॥
हानिर्वृद्धिस्तेषामवगाहविशेषतो न तु द्रव्यात् ॥ ८७ ॥
यदि वा प्रदीपरोचिर्यथा प्रमाणादवस्थित चापि ॥
अतिरिक्त न्यून वा गृहभाजनविशेषतोऽवगाहाच्च ॥८८॥
अशानामवगाहे दृष्टान्त स्वांशसस्थित ज्ञानम् ॥
अतिरिक्त न्यून वा ज्ञेयाकृति तन्मयात्र तु स्वांशै' ८९
तदिद यथा हि संविद्घट परिच्छिन्ददिहैव घटमात्रम् ॥
यदि वा सर्व लोक स्वयमवगच्छच्च लोकमात्र स्यात् ९०
न घटाकारेऽपि चित शेषाशानां निरन्वयो नाश. ॥
लोकाकारेऽपि चितो नियताशानां न चासदुत्पत्तिः ९१
किन्त्वस्ति च कोऽपि गुणोऽनिर्वचनीय' स्वत सिद्धः ॥
नाम्ना चागुरुलघुरिति गुरुलक्ष्यः स्वानुभूतिलक्ष्यो वा ॥
ननु चैव सत्यर्थादुत्पादादित्रय न सम्भवति ॥
अपि नोपादान किल कारण न फल तदनन्यात् ॥९३॥
अपि च गुण स्वांशानामपकर्षे दुर्बल' कथ न स्यात् ॥
उत्कर्षे बलवानिति दोषोऽय दुर्जयो महानिति चेत् ९४

तन्न यतः परिणामि द्रव्यं पूर्वं निरूपितं सम्यक् ॥
उत्पादादित्रयमपि सुघटं नित्येऽथ नाप्यनित्येऽर्थे ॥१९५॥
जाम्बूनदे यथा सति जायन्ते कुण्डलादयो भावाः ॥
अथ सत्सु तेषु नियमादुत्पादादित्रयं भवत्येव ॥ १९६ ॥
अनया प्रक्रियया किल बोद्धव्यं कारणं फलं चैव ॥
यस्मादेवास्य सतस्तद्‌द्वयमपि भवत्येतत् ॥ १९७ ॥
आस्तामसदुत्पादः सतो विनाशस्तदन्वयादेशात् ॥
स्थूलत्वं च कृशत्वं न गुणस्य च निजप्रमाणत्वात् ॥१९८॥
इति पर्यायाणामिह लक्षणमुक्तं यथास्थितं चाथ ॥
उत्पादादित्रयमपि प्रत्येकं लक्ष्यते यथाशक्ति ॥ १९९ ॥
उत्पादस्थितिभगाः पर्यायाणां भवन्ति किल न सतः ॥
ते पर्याया द्रव्यं तस्माद्‌द्रव्यं हि तत्रितयम् ॥ २०० ॥
तत्रोत्पादोऽवस्था प्रत्यग्रं परिणतस्य तस्य सतः ॥
सदसद्भावनिबद्धं तदतद्भावत्वववन्नयादेशात् ॥ १ ॥
अपि च व्ययोऽपि न सतो व्ययोऽप्यवस्थाव्ययः सतस्तस्य
प्रध्वंसाभावः स च परिणामित्वात्सतोऽप्यवश्यं स्यात् ॥
ध्रौव्यं सत. कथञ्चित्पर्यायार्थाच्च केवलं न सतः ॥
उत्पादव्ययवदिदं तच्चैकांशं न सर्वदेशं स्यात् ॥ ३ ॥

तद्भावाव्ययमिति वा ध्रौव्य तत्रापि सम्यगयमर्थ ॥
य पूर्वं परिणामो भवति स पश्चात्तस एव परिणाम ५
पुष्पस्य यथा गन्ध' परिणाम परिणमॅश्च गन्धगुण ॥
नापरिणामी गन्धो न च निर्गन्धाद्धि गन्धवत्पुष्पम् ॥५॥
तत्रानित्यनिदान ध्वंसोत्पादद्वय सतस्तस्य ॥
नित्यनिदान ध्रुवमिति तत्त्रयमप्यशभेद स्यात् ॥ ६ ॥
न च सर्वथा हि नित्य किञ्चित्सत्त्व गुणो न कश्चिदिति
तस्मादतिरिक्तौ द्वौ परिणतिमात्रौ व्ययोत्पादौ ॥ ७ ॥
सर्वं विप्रतिपन्न भवति यथा सति गुणे न परिणाम ॥
नापि द्रव्य न सदिति पृथक्त्वदेशानुपगतत्वात् ॥ ८ ॥
अपि चैतद्दूषणमिह यन्नित्य तद्धि नित्यमेव तथा ॥
यदनित्य तदनित्य नैकस्यानेकधर्मत्वम् ॥ ९ ॥
अपि चैकमिद द्रव्य गुणोऽयमेवेति पर्ययोऽय स्यात् ॥
इति कल्पनिको भेदो न स्याद्द्रव्यान्तरत्ववन्नियमात् ॥
ननु भवति वस्तु नित्य गुणाश्च नित्या भवन्तु वार्धिरिव
भावा कल्लोलादिवदुत्पन्नध्वंसिनो भवन्त्विति चेत् ॥
तन्न यतो दृष्टान्त प्रकृतार्थस्यैव बाधको भवति ॥
अपि तदनुक्तस्यास्य प्रकृतविपक्षस्य साधकत्वाच्च १२

अर्थान्तर हि न सत परिणामेभ्यो गुणस्य कस्यापि ॥
एकत्वाज्जलधेरिव कलितस्य तरङ्गमालाभ्यः ॥ १३ ॥
किन्तु य एव समुद्रस्तरङ्गमाला भवन्ति ता एव ॥
यस्मात्स्वय स जलधिस्तरङ्गरूपेण परिणमति ॥ १४ ॥
तस्मात्स्वयमुत्पादः सदिति ध्रौव्य व्ययोऽपि वा सदिति
न सतोऽतिरिक्त एव हि व्युत्पादो वा व्ययोऽपि वा ध्रौव्यम्
यदि वा शुद्धत्वनयान्नाप्युत्पादो व्ययोऽपि न ध्रौव्यम् ॥
गुणश्च पर्यय इति वा न स्याच्च केवल सदिति ॥ १६ ॥
अयमर्थो यदि भेदः स्यादुन्मज्जति तदा हि तत्त्रितयम्
अपि तत्त्रितय निमज्जति यदा निमज्जति स मूलतो भेदः
ननु चोत्पादध्वसौ द्वावप्यशात्मकौ भवेता हि ॥
ध्रौव्य त्रिकालविषयं तत्कथमशात्मक भवेदिति चेत् १८
नैव यतस्त्रयोंऽशाः स्वयं सदेवेति वस्तुतो न सतः ॥
नैवार्थान्तरवदिद प्रत्येकमनेकमिह सदिति ॥ १९ ॥
तत्रैतदुदाहरण यदुत्पादेन लक्ष्यमाण सत् ॥
उत्पादेन परिणत केवलमुत्पादमात्रमिह वस्तु ॥ २० ॥
यदि वा व्ययेन नियत केवलमिह सदिति लक्ष्यमाण स्यात्
व्ययपरिणत च सदिति व्ययमात्र किल कथ हि तन्न स्यात्

ध्रौव्येण परिणत सद्यदि वा ध्रौव्येण लक्ष्यमाण स्यात् ॥
उत्पादव्ययवदिद स्यादिति तद्ध्रौव्यमात्र सत् ॥ २२ ॥
सन्दृष्टिर्मृद्रव्य सता घटेनेह लक्ष्यमाण सत् ॥
केवलमिह घटमात्रमसता पिण्डेन पिण्डमात्र स्यात् ॥२३॥
यदि वा तु लक्ष्यमाण केवलमिह मृच मृत्तिकात्वेन ॥
एव चैकस्य सतो व्युत्पादादित्रयश्च तनाशा. ॥ २४ ॥
न पुन सतो हि सर्ग. केनचिदशैकभागमात्रेण ॥
सहारो वा ध्रौव्य वृक्ष फलपुष्पपत्रवन्न स्यात् ॥ २५ ॥
ननु चोत्पादादित्रयमशानामथ किमशिनो वा स्यात् ॥
अपि किं सदशमात्र किमथांशमसदस्ति पृथगिति चेत् ॥
तन्न यतोऽनेकान्तो वलवानिह खलु न सर्वथैकान्त. ॥
सर्वं स्यादविरुद्ध तत्पूर्व तद्विना विरुद्ध स्यात् ॥ २७ ॥
केवलमशानामिह नाप्युत्पादो व्ययोऽपि न ध्रौव्यम् ॥
नाप्यशिनस्त्रय स्यात्किमुतांशेनाशिनो हि तन्त्रितयम् २८
ननु चोत्पादध्वसौ स्यातामन्वर्थतोऽथ वाङ्मात्रात् ॥
दृष्टविरुद्धत्वादिह ध्रुवत्वमपि चैकस्य कथमिति चेत् २९
सत्य भवति विरुद्ध क्षणभेदो यदि भवेत्त्रयाणा हि ॥
अथ वा स्वय सदेव हि नश्यत्युत्पद्यते स्वय सदिति ३०

क्वापि कुतश्चित्किञ्चित्कस्यापि कथञ्चनापि तन्न स्यात् ॥
तत्साधकप्रमाणाभावादिह सोऽप्यदृष्टान्तात् ॥ ३१ ॥
ननु च स्वावसरे किल सर्गः सर्गैकलक्षणत्वात्स्यात् ॥
संहारः स्वावसरे स्यादिति संहारलक्षणत्वाद्वा ॥ ३२ ॥
ध्रौव्यं चात्मावसरे भवति ध्रौव्यैकलक्षणात्तस्य ॥
एवं लक्षणभेदः स्याद्बीजांकुरपादपत्ववदिति चेत् ॥३३॥
तन्न यतः क्षणभेदो न स्यादेकसमयमात्रं तत् ॥
उत्पादादित्रयमपि हेतोः सन्दृष्टितोऽपि सिध्दत्वात् ३४
अथ तद्यथा हि बीजं बीजावसरे सदेव नासदिति ॥
तत्र व्ययो न सत्त्वाद्व्ययश्च तस्मात्सदङ्कुरावसरे ॥ ३५ ॥
बीजावस्थायामपि न सदस्त्यङ्कुरभवोऽस्ति वा सदिति ॥
तस्मादुत्पादः स्यात्स्वावसरे चाङ्कुरस्य नान्यत्र ॥ ३६ ॥
यदि वा बीजाङ्कुरयोरविशेषात्पादपत्वमिति वाच्यम् ॥
नष्टोत्पन्नं न तदिति नष्टोत्पन्नं च पर्ययाभ्यां हि ॥ ३७ ॥
आयातं न्यायबलादेतद्यत्त्रितयमेककालं स्यात् ॥
उत्पन्नमङ्कुरेण च नष्टं बीजेन पादपत्वं तत् ॥ ३८ ॥
अपि चाङ्कुरसृष्टेरिह य एव समयः स बीजनाशस्य ॥
उभयोरप्यात्मत्वात्स एव कालश्च पादपत्वस्य ॥ ३९ ॥

तस्मादनवद्यमिद प्रकृत तत्त्वस्य चैकसमये स्यात् ॥
उत्पादादित्रयमपि पर्यायार्थान्न सर्वथाऽपि सत' ॥ ४० ॥
भवति विरुध्द हि तदा यदा सत केवलस्य तत्त्रितयम्
पर्ययनिरपेक्षत्वात्क्षणभेदोऽपि च तदैव सम्भवति ४१ ॥
यदि वा भवति विरुध्द तदा यदाप्येकपर्ययस्य पुन ॥
अस्त्युत्पादो यस्य व्ययोऽपि तस्यैव तस्य वै ध्रौव्यम् ४२
प्रकृत सतो विनाश केनचिदन्येन पर्ययेण पुन. ॥
केनचिदन्येन पुन स्यादुत्पादो ध्रुव तदन्येन ॥ ४३ ॥
सन्दृष्टि पादपवत्स्वयमुत्पन्न सदङ्कुरेण यथा ॥
नष्टो बीजेन पुनर्ध्रुवमित्युभयत्र पादपत्वेन ॥ ४४ ॥
न हि बीजेन विनष्ट स्यादुत्पन्नश्च तेन बीजेन ॥
ध्रौव्य बीजेन पुन' स्यादित्यध्यक्षपक्षबाध्यत्वात् ॥ ४५
उत्पादव्ययपयोरपि भवति यदात्मा स्वय सदेवेति ॥
तस्मादेतद्द्वयमपि वस्तु सदेवेति नान्यदस्ति सत' ॥ ४६
पर्यायादेशत्वादस्त्युत्पादो व्ययोऽस्ति च ध्रौव्यम् ॥
द्रव्यार्थादेशत्वान्नाप्युत्पादो व्ययोऽपि न ध्रौव्यम् ॥ ४७
ननु चोत्पादेन सता कृतमसतैकेन वा व्ययेनाथ ॥
यदि वा ध्रौव्येण पुनर्यदवश्य तत्त्रयेण कथमिति चेत्

तत्र यद्विनाभावः प्रादुर्भाव-ध्रुवव्ययानां हि ॥
यस्मादेकेन विना न स्यादितरद्वय तन्नियमात् ॥ ४९ ॥
अपि च द्वाभ्यां ताभ्यामन्यतमाभ्यां विना न चान्यतरत्,
एकं वा तदवश्यं तत्त्रयमिह वस्तु संसिद्ध्यै ॥ ५० ॥
अथ तद्यथा विनाशः प्रादुर्भावं विना न भावीति ॥
नियतमभावस्य पुनर्भावेन पुरस्सरत्वाच्च ॥ ५१ ॥
उत्पादोऽपि न भावी व्ययं विना वा तथा प्रतीतत्वात् ॥
प्रत्यग्रजन्मनः किल भावस्याभावतः कृतार्थत्वात् ५२
उत्पादध्वंसौ वा द्वावपि न स्तो विनापि तद्ध्रौव्यम् ॥
भावस्याभावस्य च वस्तुत्वे सति तदाश्रयत्वाद्वा ॥ ५३
अपि च ध्रौव्यं न स्यादुत्पादव्ययद्वयं विना नियमात् ॥
यदिह विशेषाभावे सामान्यस्य सतोऽप्यभावत्वात् ॥ ५४
एवं चोत्पादादित्रयस्य साधीयसी व्यवस्थेह ॥
नैवान्यथाऽप्यनिह्नववदतः स्वस्यापि घातकत्वाच्च ॥५५॥
अथ तद्यथा हि सर्गं केवलमेकं हि मृगयमाणस्य ॥
असदुत्पादो वा स्यादुत्पादो वा न कारणाभावात् ५६
अप्यथ लोकयतः किल संहारं सर्गपक्षनिरपेक्षम् ॥
भवति निरन्वयनाशः सतो न नाशोऽथवाऽप्यसतः

अथ च ध्रौव्यं केवलमेकं किल पक्षमभ्यवसतश्च ॥
द्रव्यमपरिणामि स्यात्तदपरिणामाच्च नापि तद्ध्रौव्यम् ॥
अथ च ध्रौव्योपेक्षितमुत्पादादिद्वयं प्रमाणयतः ॥
सर्वं क्षणिकमिवैतत्सदभावे वा व्ययो न सर्गश्च ॥ ५९ ॥
एतद्दोषभयादिह प्रकृतं चास्तिक्यमिच्छता पुंसा ॥
उत्पादादीनामयमविनाभावोऽवगन्तव्यः ॥ ६० ॥
उक्तं गुणपर्ययवद्द्रव्यं यत्तद्व्ययादियुक्तं सत् ॥
अथ वस्तुस्थितिरिह किल वाच्याऽनेकान्तबोधशुद्ध्यर्थम्
स्यादस्ति च नास्तीति च नित्यमनित्यं त्वनेकमेकं च ॥
तदतच्चेति चतुष्टययुग्मैरिव गुम्फितं वस्तु ॥ ६२ ॥
अथ तद्यथा यदस्ति हि तदेव नास्तीति तच्चतुष्कं च ॥
द्रव्येण क्षेत्रेण च कालेन तथाऽथ वाऽपि भावेन ॥६३॥
एका हि महासत्ता सत्ता वा स्यादवान्तराख्या च ॥
न पृथक्प्रदेशवत्त्वं स्वरूपभेदोऽपि नानयोरेव ॥ ६४ ॥
किन्तु सदित्यभिधानं यत्स्यात्सर्वार्थसार्थसंस्पर्शि ॥
सामान्यग्राहकत्वात्प्रोक्ता सन्मात्रतो महासत्ता ॥ ६५ ॥
अपि चावान्तरसत्ता सद्द्रव्यं सन्गुणश्च पर्यायः ॥
सद्योत्पादध्वंसः सदिति ध्रौव्यं किलेति विस्तारः ॥६६॥

अयमर्थो वस्तु यदा सदिति महासत्तयाऽवधार्येत ॥
स्यात्तदवान्तरसत्तारूपेणाभाव एव न तु मूलात् ॥६७॥
अपि चावान्तरसत्तारूपेण यदाऽवधार्यते वस्तु ॥
अपरेण महासत्तारूपेणाभाव एव भवति तदा ॥ ६८ ॥
दृष्टान्तः स्पष्टोऽयं यथा पटो द्रव्यमस्ति नास्तीति ॥
पटशुक्लत्वादीनामन्यतमस्याविवक्षितत्वाच्च ॥ ६९ ॥
क्षेत्रं द्विधाऽवधानात्सामान्यमथ च विशेषमात्रं स्यात् ॥
तत्र प्रदेशमात्रं प्रथमं प्रथमेतरं तदंशमयम् ॥ ७० ॥
अथ केवलं प्रदेशात्प्रदेशमात्रं यदेष्यते वस्तु ॥
अस्ति स्वक्षेत्रतया तदंशमात्राविवक्षितत्वान्न ॥ ७१ ॥
अथ केवलं तदंशात्तावन्मात्राद्यदेष्यते वस्तु ॥
अस्त्यंशविवक्षितया नास्ति च देशाविवक्षितत्वाच्च ॥७२॥
सन्दृष्टिः पटदेशः क्षेत्रस्थानीय एव नास्त्यस्ति ॥
शुक्लादितन्तुमात्रादन्यतरस्याविवक्षितत्वाद्वा ॥ ७३ ॥
कालो वर्तनमिति वा परिणमनं वस्तुनः स्वभावेन ॥
सोऽपि पूर्ववद्द्वयमिह सामान्यविशेषरूपत्वात् ॥ ७४ ॥
सामान्यं विधिरूपं प्रतिषेधात्मा भवति विशेषश्च ॥
उभयोरन्यतरस्योन्मग्नत्वादस्ति नास्तीति ॥ ७५ ॥

यदि वा स्यान्मतं ते व्यतिरेके नान्वयः कदाऽप्यस्ति ॥
न तथा पक्षच्युतिरिह व्यतिरेकोऽप्यन्वये यतो न स्यात्
तस्मादिदमनवद्यं केवलमयमन्वयो यथाऽस्ति तथा ॥
व्यतिरेकोऽस्त्यविशेषादेकोक्त्या चैकशः समानतया ९५
दृष्टान्तोऽप्यस्ति घटो यथा तथा स्वस्वरूपतोऽस्ति पटः ॥
न घटः पटेऽथ न पटो घटेऽपि भवतोऽथ घटपटाविह हि
न पटाभावो हि घटो न पटाभावे घटस्य निष्पत्तिः ॥
न घटाभावो हि पटः पटसर्गो वा घटव्ययादिति चेत्
तत्किं व्यतिरेकस्याभावेन विनाऽन्वयो नास्तीति ॥
अस्त्यन्वयः स्वरूपादिति वक्तुं शक्यते यतस्त्विति चेत्
तन्न यतः सदिति स्यादद्वैतं द्वैतभावभागपि च ॥
तत्र विधौ विधिमात्रं तदिह निषेधे निषेधमात्रं स्यात् ९९
न हि किञ्चिद्विधिरूपं किञ्चित्तच्छेषतो निषेधांशम् ॥
आस्तां साधनमस्मिन्नाम द्वैतं न निर्विशेषत्वात् ॥१००॥
न पुनर्द्रव्यान्तरवत्सञ्ज्ञाभेदोऽप्यबाधितो भवति ॥
तत्र विधौ विधिमात्रात्तच्छेषविशेषादिलक्षणाभावात् ॥१॥
अपि च निषिद्धत्वे सति न हि वक्तुं ...

तस्माद्विधिरूपं वा निर्दिष्टं सन्निषेधरूपं वा ॥
संहृत्याऽन्यतरत्वादन्यतरे सन्निरूप्यते तदिह ॥ ३ ॥
दृष्टान्तोऽत्र पटत्वं यावन्निर्दिष्टमेव तन्तुतया ॥
तावन्न पटो नियमाद्दृश्यन्ते तन्तवस्तथाऽध्यक्षात् ॥ ४ ॥
यदि पुनरेव पटत्वं तदिह तथा दृश्यते न तं तुतया ॥
अपि संगृह्य समन्तात्पटोऽयमिति दृश्यते सद्भिः ॥ ५ ॥
इत्यादिकाश्च बहवो विद्यन्ते पाक्षिका हि दृष्टान्ताः ॥
तेषामुभयाङ्गत्वान्न हि कोऽपि विपक्षः स्यात् ॥ ६ ॥
अयमर्थो विधिरेव हि युक्तिवशात्स्यात्स्वयं निषेधात्मा ॥
अपि च निषेधस्तद्वद्विधिरूपः स्यात्स्वयं हि युक्तिवशात्॥
इति विन्दन्निह तत्त्वं जैनः स्यात्कोऽपि तत्त्ववेदीति ॥
अर्थात्स्यात्स्याद्वादी तदपरथा नाम सिंहमाणवकः ॥८॥
ननु सदिति स्थायि यथा सदिति तथा सर्वकालसमयेषु
तत्र विवक्षितसमये तत्स्यादथवा न तदिदमिति चेत् ९
सत्यं तत्रोत्तरमिति सन्मात्रापेक्षया तदेवेदम् ॥
न तदेवेदं नियमात्सदवस्थापेक्षया पुनः सदिति ॥ १० ॥
ननु तदतदोर्द्वयोरिह नित्यानित्यत्वयोरेव ॥
को भेदो भवति मिथो लक्षणलक्ष्यैकभेदभिन्नत्वात् ११

नैव यतो विशेष समयात्परिणमति वा न नित्यादौ ॥
सदसद्भावविचारे परिणामो विसदृशोऽथ सदृशो वा १२
ननु सन्नित्यमनित्य कथञ्चिदेतावतैव तत्सिद्धि' ॥
तत्किं तदतद्भावाभावविचारेण गौरवादिति चेत् ॥१३॥
नैव तदतद्भावाभावविचारस्य निह्नवे दोषात् ॥
नित्यानित्यात्मनि सति सत्यपि न स्यात्क्रियाफल तत्त्वम्
अयमर्थो यदि नित्य सर्वं सत् सर्वथेति किल पक्ष ॥
न तथा कारणकार्यकारकसिद्धिस्तु विक्रियाभावात् १५
यदि वा सदनित्य स्यात्सर्वस्व सर्वथेति किल पक्ष ॥
न तथा क्षणिकत्वादिह क्रियाफल कारकाणि तत्त्व च ॥
अपि नित्यानित्यात्मनि सत्यपि सति वा न सा पक्षसिद्धि
तदतद्भावाभावैर्विना न यस्माद्विशेषनिष्पत्ति ॥ १७ ॥
अथ तद्यथा यथा सत्परिणममान यदुक्तपस्तु तथा ॥
भवति समीहितसिद्धिर्विना न तदतद्विवक्षया हि यथा १८
अपि परिणममान सन्नतदेतत्सर्वथाऽन्यदेवेति ॥
इति पूर्वपक्ष किल विना तदेवेति दुर्निवारः स्यात् १९
अपि परिणत यथा सद्दीपशिखा सर्वथा तदेव यथा ॥
इति पूर्वपक्ष किन्तु दुर्वारः स्याद्विना न तदिति नयात् ॥

तस्मादवसेय सन्नित्यानित्यत्ववत्तदतद्वत् ॥
यस्मादेकेन विना न समीहितसिद्धिरध्यक्षात् ॥ २१ ॥
ननु भवतु सर्वथैव हि परिणामो विसदृशोऽथ सदृशो वा
ईहितसिद्धिस्तु सतः परिणामित्वाद्यथाकथचिद्वै ॥ २२ ॥
तन्न यतः परिणामः सन्नपि सदृशैकपक्षतो न तथा ॥
न समर्थश्चार्थकृते नित्यैकान्तादिपक्षवत्सदृशात् ॥ २३ ॥
नापीष्टसंसिध्यै परिणामो विसदृशैकपक्षात्मा ॥
क्षणिकैकान्तवदसतः प्रादुर्भावात्सतो विनाशाद्वा ॥२४॥
एतेन निरस्तोऽभूत्क्लीवत्वादात्मनोऽपराद्धतया ॥
तदतद्भावाभावापह्नववादी विबोध्यते त्वधुना ॥ २५ ॥
तदतद्भावनिबद्धो यः परिणामः सतः स्वभावतया ॥
तद्दर्शनमधुना किल दृष्टान्तपुरस्सरं वक्ष्ये ॥ २६ ॥
जीवस्य यथा ज्ञानं परिणामः परिणमंस्तदेवेति ॥
सदृशस्योदाहृतिरिति जातेरनतिक्रमत्वतो वान्या ॥२७॥
यदि वा तदिह ज्ञानं परिणामः परिणमन्न तदिति यतः
स्वावसरे यत्सत्त्वं तदसत्त्वं परत्र नययोगात् ॥ २८ ॥
अत्रापि च सन्दृष्टिः सन्ति च परिणामतोऽपि कालांशाः
जातेरनतिक्रमतः सदृशत्वनिबन्धनं एव ॥ २९ ॥

अपि नययोगाद्विसदृशसाधनसिध्यै त एव कालांशाः ॥
समयसमय(?) सोऽपीति बहुमतीतिरत्वात् ॥ १० ॥
अतन्दिमिह प्रतीतौ क्रिया फल कारकाणि हेतुरिति ॥
तदिद् स्यादिह सँविदि हि हेतुस्तत्त्व हि चेन्मिथः प्रेम ॥
अयमर्थ सदसद्वत्तदतदपि च विधिनिषेधरूप स्यात् ॥
न पुनर्निरपेक्षतया तद्द्वयमपि तत्त्वमुभयतया ॥ १२ ॥
*रूपनिदर्शनमेतत्तदिति यदा केवल विधिर्मुख्यः ॥*
अतदिति गुणो पृथक्त्वात्तन्मात्र निरवशेषतया ॥ १३ ॥
अतदिति विधिर्विवक्ष्यो मुख्य स्यात्केवल यदा देशात् ॥
तदिति स्वतो गुणत्वादविवक्षितमित्यतन्मात्रम् ॥ १४ ॥
शेषविशेषाख्यान ज्ञातव्य चोक्तवक्ष्यमाणतया ॥
सूत्रे पदानुवृत्तिर्ग्राह्या सूत्रान्तरादिति न्यायात् ॥ १५ ॥
ननु किं नित्यमनित्य किमथोभयमनुभय च तत्त्व स्यात् ॥
व्यस्त किमथ समस्त क्रमत किमथाक्रमादेतत् ॥ १६ ॥
सत्त्व स्वपरनिहत्यै सर्व किल सर्वथेति पदपूर्वम् ॥
स्वपरोपकृतिनिमित्त सर्व स्यात्स्यात्पदाङ्कित तु पदम् ॥
अथ तद्यथा यथा सत्स्वतोऽस्ति सिद्ध तथा च परिणामि
इति नित्यमथानित्य सच्चैकद्विस्वभावतया ॥ १८ ॥

अयमर्थो वस्तु यदा केवलमिह दृश्यते न परिणामः ॥
नित्य तदव्ययादिह सर्व स्यादन्वयार्थनययोगात् ॥ ३९ ॥
अपि च यदा परिणामः केवलमिह दृश्यते न किल वस्तु
अभिनरभावानभिनवभावाभावादनित्यमशनपात् ॥४०॥
ननु चैक सदिति यथा तथा च परिणाम एव तद्द्वैतम् ॥
वस्तुं(वतु) क्षममन्यतर क्रमतो हि सम न तदिति कुत ४१
अथ किं कखादिवर्णा सन्ति तथा युगपदेव तुल्यतया ॥
वक्ष्यन्ते क्रमतस्ते क्रमवर्तित्वाध्द्वने? रिति न्यायात् ॥४२॥
अथ किं खरतरदृष्ट्या विन्ध्यहिमाचलयुग यथास्ति तथा ॥
भवतु विवक्ष्यो मुख्यो विवक्षुरिच्छावशाद्गुणोऽन्यतर
अथ चैकः कोऽपि यथा सिंह साधुर्विवक्षितो द्वेधा ॥
सत्परिणामोऽपि तथा भवति विशेषणविशेष्यवदिति
अथ किमनेकार्थत्वादेक नामद्वयाङ्कित किञ्चित् ॥
अग्निर्वैश्वानर इव सव्येतरगोविषाणवदिक्रमथ ॥ ४५ ॥
अथ किं कालविशेषादेक पूर्व ततोऽपरः पश्चात् ॥
आमानामविशिष्टं पृथिवीत्व तद्यथा तथा किमिति ॥ ४६ ॥
अथ किं कालक्रमतोऽप्युत्पन्न वर्तमानमिव चास्ति ॥
भवति सपत्नीद्वयमिह यथा मिथः मत्यनीकतया ॥ ४७ ॥

अथ किं ज्येष्ठकनिष्ठभ्रातृद्वयमिव मिथः सपक्षतया ॥
किमथोपसुन्दसुन्दमल्लन्यायात्किलेतरेतरस्मात् ॥ ४८ ॥
केवलमुपचारादिह भवति परत्वापरत्ववत्किमथ ॥
पूर्वापरदिग्द्वैतं यथा तथा द्वैतमिदमुपेक्षतया ॥ ४९ ॥
किमथाधाराधेयन्यायादिह कारकादिद्वैतमिव ॥
स यथा घटे जलं स्यान्न स्यादिह जले घटः क्वचित् ५०
अथ किं बीजाङ्कुरवत्कारणकार्यद्वयं यथाऽस्ति तथा ॥
स यथा योनीभूतं तत्रैकं योनिजं तदन्यतरम् ॥ ५१ ॥
अथ किं कनकोपलवत्किञ्चित्स्वं किञ्चिदस्वमेव यतः ॥
ग्राह्यं स्वं सारतया तदितरमस्वं तु हेयमसारतया ॥५२॥
अथ किं वागर्थद्वयमिव सम्पृक्तं सदर्थसंसिद्धयै ॥
पानकवत्तन्नियमादर्थाभिव्यञ्जकं द्वैतात् ॥ ५३ ॥
अथ किमवश्यतया तद्वक्तव्यं स्यादनन्यथासिद्धेः ॥
भेरीदण्डवदुभयोः संयोगादिव विवक्षितः सिध्येत् ॥५४॥
अथ किमुदासीनतया वक्तव्यं वा यथारुचित्वान्न ॥
यदपूर्णन्यायादप्यन्यतरेणेह साध्यसंसिद्धेः ॥ ५५ ॥
अथ किमुपादानतया स्वार्थं सृजति कश्चिदन्यतमः ॥
अपरः सहकारितया प्रकृतं पुष्णाति मित्रवदिति ॥५६॥

शत्रुवदादेशः स्याच्चद्द्वद्वैतमेव किमिति यथा ॥
एकं विनाश्य मूलादन्यतमः स्वयमुदेति निरपेक्षः ॥५७॥
अथ किं वैमुख्यतया विसन्धिरूपं द्वयं तदर्थकृते ॥
वामेतरकरवर्तितरज्जूयुग्मं यथा स्वमिदमिति चेत् ॥५८॥
नैवमदृष्टान्तत्वात्स्वेतरपक्षोभयस्य घातित्वात् ॥
नाचरते मन्दोऽपि च स्वस्य विनाशाय कश्चिदेव यतः ५९
तत्र मिथस्सापेक्षधर्मद्वयदेशितप्रमाणस्य ॥
माभूदभाव इति न हि दृष्टान्तो वर्ण्यते किलेत्यत्र ॥६०॥
अपि च प्रमाणाभावे न हि नयपक्षः क्षमः स्वरक्षायै ॥
वाक्यविवक्षाभावे पदपक्षः कारकोऽपि नार्थकृते ॥ ६१ ॥
संस्कारस्य वशादिह पदेषु वाक्यप्रतीतिरिति चेद्वै ॥
वाच्यं प्रमाणमात्रं न नयादुक्तस्य दुर्निवारत्वात् ॥६२॥
अथ चैवं सति नियमान्दुर्वारं दूषणद्वयं भवति ॥
नयपक्षच्युतिरिति वा क्रमवर्तित्वाद्ध्वनेरहेतुत्वम् ॥ ६३ ॥
विन्ध्यहिमाचलयुग्मं दृष्टान्तो नेष्टसाधनायालम् ॥
तदनेकत्वे नियमादिच्छानर्थक्यतोऽविवक्षश्च ॥ ६४ ॥
नालमसौ दृष्टान्तः सिंहः साधुर्यथेह कोऽपि नरः ॥
दोषादपि स्वरूपासिद्धत्वात्किल यथा जलं सुरभि ॥६५॥

नासिद्धं हि स्वरूपासिद्धत्व तस्य साध्यशून्यत्वात् ॥
केवलमिह रूढिवशादुपेक्ष्य धर्मद्वय यथेच्छत्वात् ॥ ६६ ॥
अग्निर्वैश्वानर इव नामद्वैत च नेष्टसि चर्थम् ॥
साध्यविरुद्धत्वादिह सन्दृष्टेरथ च साध्यशून्यत्वात् ॥
नामद्वय किमर्थादुपेक्ष्य धर्मद्वय च किमपेक्ष्य ॥
प्रथमे धर्माभावेऽप्यल विचारेण धर्मिणो भावात् ॥ ६८॥
प्रथमेतरपक्षेऽपि च भिन्नमभिन्न किमन्वयात्तदिति ॥
भिन्न चेदविशेषादुक्तवदसतो हि कि विचारतया ॥६९॥
अथ चेद्युतसिद्धत्वात्तन्निष्पत्तिर्द्वयोः पृथक्त्वेऽपि ॥
सर्वस्य सर्वयोगात्सर्व सर्वोऽपि दुर्निवार स्यात् ॥७०॥
चेदन्वयादभिन्न धर्मद्वैत किलेति नयपक्ष' ॥
रूपपटादिवदिति किं किमथ क्षारद्रव्यवचेति ॥ ७१ ॥
क्षारद्रवदिद चेदनुपादेय मिथोऽनपेक्षत्वात् ॥
वर्णततेरविशेषन्यायान्न नयाप्रमाण वा ॥ ७२ ॥
रूपपटादिवदिति चेत्सत्य प्रकृतस्य सानुकूलत्वात् ॥
एक नामद्वयाङ्गमिति पक्षस्य स्वय विपक्षत्वात् ॥ ७३ ॥
अपि चाकिञ्चित्कर इव सव्येतरगोविषाणदृष्टान्तः ॥
सुरभि गगनारविन्दमिवाश्रयासिद्धदृष्टान्तात् ॥ ७४ ॥

न यतः पृथगिति किञ्चित्सत्परिणामातिरिक्तमिह वस्तु ॥
दीपप्रकाशयोरिह गुम्फितमिव तद्द्वयोरैक्यात् ॥ ७५ ॥
आमा नामविशिष्टं पृथिवीत्वं नेह भवति दृष्टान्तः ॥
क्रमवर्तित्वादुभयोः स्वेतरपक्षद्वयस्य घातित्वात् ॥ ७६ ॥
परपक्षस्तावत्क्रमवर्तित्वाच्च स्वतः प्रतिज्ञायाः ॥
असमर्थसाधनत्वात्स्वयमपि ना बाधकः स्वपक्षस्य ॥७७॥
तत्साध्यमनित्य वा यदि वा नित्यं निसर्गतो वस्तु ॥
स्यादिह पृथिवीत्वतया नित्यमनित्य ह्यपक्वपक्वतया ॥७८॥
अपि च सपत्नीयुग्म स्यादिति हास्यास्पदोपमा दृष्टिः ॥
इह यदसिद्धविरुद्धानैकान्तिकदोषदुष्टत्वात् ॥ ७९ ॥
माता मे वन्ध्या स्यादित्यादिवदपि विरुद्धवाक्यत्वात् ॥
कृतकत्वादिति हेतोः क्षणिककान्तात्कृतं विचारतया ८०
तद्वज्ज्येष्ठकनिष्ठभ्रातृद्वैत विरुद्धदृष्टान्तः ॥
सति वा धर्मिणि तत्त्वे तथाऽऽश्रयासिध्ददोषत्वात् ८१
अपि कोऽपि परायत्तः सोऽपि परः सर्वथापरायत्तात् ॥
सोऽपि परायत्तः स्यादित्यनवस्थाप्रसङ्गदोषश्च ॥ ८२ ॥
नार्थक्रियासमर्थो दृष्टान्तः कारकादिनापि यतः ॥
सव्यभिचारित्वादिह सपक्षवृत्तिर्विपक्षवृत्तिश्च ॥८३ ॥

वृक्षे शाखा हि यथा स्यादेकात्मनि तथैव नानात्वे ॥
स्यात्या दर्वीति हेतोर्व्यभिचारी कारकः कथं न स्यात् ॥
अपि सव्यभिचारित्वे यथाकथञ्चित्सपक्षदक्षश्चेत् ॥
नयतः परपक्षरिपुर्यथा तथाऽरिः स्वयं स्वपक्षस्य ॥ ८५ ॥
साध्यं देशांशाद्वा सत्परिणामद्वयस्य सांशत्वम् ॥
तत्स्वान्यैकविलोपे कस्यांशा अंशमात्र एवांशः ॥ ८६ ॥
नाप्युपयोगी क्वचिदपि बीजाङ्कुरवदिहेति दृष्टान्तः ॥
स्वावसरे स्वावसरे पूर्वापरभावभावित्वात् ॥ ८७ ॥
बीजावसरे नाङ्कुर इव बीजं नाङ्कुरक्षणे हि यथा ॥
न तथा सत्परिणामद्वैतस्य तदेककालत्वात् ॥ ८८ ॥
सदभावे परिणामो भवति न सत्ताक आश्रयाभावात् ॥
दीपाभावे हि यथा तत्क्षणमिव दृश्यते प्रकाशो न ॥८९॥
परिणामाभावेऽपि च सदिति च नालम्ब्यते हि सत्तान्तात्
स यथा प्रकाशनाशे प्रदीपनाशोऽप्यवश्यमध्यक्षात् ॥९०॥
अपि च क्षणभेदः किल भवतु यदीहेष्टसिद्धिरनायासात्
साऽपि न यतस्तथा सति सतो विनाशोऽसतश्च सर्गः स्यात् ॥
कनकोपलवदिहैषः क्षमते न परीक्षितः क्षणं स्थातुम् ॥
गुणगुणिभावाभावाद्यतः स्वयमसिद्धदोषात्मा ॥ ९२ ॥

हेयादेयविचारो भवति हि कनकोपलद्वयोरेव ॥
तदनेकद्रव्यत्वान्नस्यात्साध्ये तदेकद्रव्यत्वात् ॥ ९३ ॥
वागर्थद्वयमिति वा दृष्टान्तो न स्वसाधनायालम् ॥
घट इव वर्णाद्वैतात्कम्बुग्रीवादिमानिहास्त्यपरः ॥ ९४ ॥
यदि वा निस्सारतया वागेवार्थं समस्यते सिध्यै ॥
न तथाऽपीष्टसिद्धिः शब्दवदर्थस्याप्यनित्यत्वात् ॥ ९५ ॥
स्यादविचारितरम्या भेरीदण्डवदिहेति सन्दृष्टिः ॥
पक्षाधर्मत्वेऽपि च व्याप्यासिद्धत्वदोषदुष्टत्वात् ॥ ९६ ॥
युतसिद्धत्व स्यादिति सत्परिणामद्वयस्य यदि पक्षः ॥
एकस्यापि न सिद्धिर्यदि वा सर्वोऽपि सर्वधर्मः स्यात् ॥
इह पदपूर्णन्यायादस्ति परीक्षाक्षमो न दृष्टान्तः ॥
अविशेषत्वापत्तौ द्वैताभावस्य दुर्निवारत्वात् ॥ ९८ ॥
अपि चान्यतरेण विना यथेष्टसिद्धिस्तथा तदितरेण ॥
भवतु विनापि च सिद्धिः स्यादेवं कारणाद्यभावश्च ॥
मित्रद्वैतवदित्यपि दृष्टान्तः स्वप्नसन्निभो हि यतः ॥
स्याद्गौरवप्रसङ्गाद्धेतोरपि हेतुहेतुरनवस्था ॥ ४०० ॥
तदुदाहरण कश्चित्स्वार्थं सृजतीति मूलहेतुतया ॥
अपरः सहकारितया तमनु तदन्योऽपि दुर्निवारः स्यात्

वृक्षे शाखा हि यथा स्यादेकात्मनि तथैव नानात्वे ॥
स्थाल्या दधीति हेतोर्व्यभिचारी कारक कथ न स्यात् ॥
अपि सव्यभिचारित्वे यथाकथञ्चित्सपक्षदक्षश्चेत् ॥
नयत्र परपक्षरिपुर्यथा तथाऽरि स्वय स्वपक्षस्य ॥८५॥
साध्य देशाशाद्वा सत्परिणामद्वयस्य साशसम् ॥
तत्साम्येकविलोपे कस्याशा अशमात्र एवाश ॥ ८६ ॥
नाप्युपयोगी क्वचिदपि बीजाङ्कुरवादिहेति दृष्टान्त ॥
स्वावसरे स्वावसरे पूर्वापरभावभावित्वात् ॥ ८७ ॥
बीजावसरे नाङ्कुर इव बीज नांकुरक्षणे हि यथा ॥
न तथा सत्परिणामद्वैतस्य तदेककालत्वात् ॥ ८८ ॥
सदभावे परिणामो भवति न सचाऽ आश्रयाभावात् ॥
दीपाभावे हि यथा तत्क्षणमिव दृश्यते प्रकाशो न ॥८९॥
परिणामाभावेऽपि च सदिति च नालम्ब्यते हि सत्तान्तात्
स यथा प्रकाशनाशे प्रदीपनाशोऽप्यवश्यमध्यक्षात् ॥९०॥
अपि च क्षणभेद किल भवतु यदीहेष्टसिद्धिरनायासात्
साऽपि न यतस्तथा स्ति सतो विनाशोऽसतश्च सर्ग स्यात् ॥
कनकोपलवदिहैष क्षमते न परीक्षितः क्षण स्थातुम् ॥
गुणगुणिभावाभावायत, स्वयमसिद्धदोषात्मा ॥ ९२ ॥

हेयादेयविचारो भवति हि कनकोपलद्वयोरेव ॥
तदनेकद्रव्यत्वान्नस्यात्साम्ये तदेकद्रव्यत्वात् ॥ ९३ ॥
वागर्थद्वयमिति वा दृष्टान्तो न स्वसाधनायालम् ॥
घट इव वर्णाद्वितात्कम्बुग्रीवादिमानिहास्त्यपरः ॥ ९४ ॥
यदि वा निस्सारतया वागेवार्थः समस्यते सिध्यै ॥
न तथाऽपीष्टसिद्धिः शब्दवदर्थस्याप्यनित्यत्वात् ॥ ९५ ॥
स्यादविचारितरम्या भेरीदण्डवदिहेति सन्दृष्टिः ॥
पक्षाधर्मत्वेऽपि च व्याप्यासिद्धत्वदोषदुष्टत्वात् ॥ ९६ ॥
युतसिद्धत्वं स्यादिति सत्परिणामद्वयस्य यदि पक्षः ॥
एकस्यापि न सिद्धिर्यदि वा सर्वोऽपि सर्वधर्मः स्यात् ॥
इह पदपूर्णन्यायादस्ति परीक्षाक्षमो न दृष्टान्तः ॥
अविशेषत्वापत्तौ द्वैताभावस्य दुर्निवारत्वात् ॥ ९८ ॥
अपि चान्यतरेण विना यथेष्टसिद्धिस्तथा तदितरेण ॥
भवतु विनापि च सिद्धिः स्यादिव कारणाद्यभावश्च ॥
मित्रद्वैतवदित्यपि दृष्टान्तः स्वप्नसन्निभो हि यतः ॥
स्वाह्नौरचमसङ्गाद्धेतोरपि हेतुहेतुरनवस्था ॥ ४०० ॥
तदुदाहरण कश्चित्स्वार्थं सृजतीति मूलहेतुतया ॥
अपरः सहकारितया तमनु तदन्योऽपि दुर्निवारः स्यात्

कार्यम्प्रति निमित्तत्वाद्धेतुद्वैत न ततोऽतिरिक्त चेत् ॥
तन्न यतस्तन्नियमग्राहकमिव न प्रमाणमिह ॥ २ ॥
एव मिथ' समक्षद्वैतवदित्यपि न साधुदृष्टान्त ॥
अनवस्थादोषत्वात्तथाऽरिरस्यापरारिरपि यस्मात् ॥ ३ ॥
कार्यमपि नियतत्वाच्छत्रुद्वैते न ततोऽतिरिक्त चेत् ॥
तन्न यतस्तन्नियमग्राहकमिव न प्रमाणमिह ॥ ४ ॥
वामेतरकरवर्तितरज्जूयुग्म न चेह दृष्टान्त ॥
बाधितविषयत्वाद्वा दोषात्कालात्ययापदिष्टत्वात् ॥ ५ ॥
तद्वाक्यमुपादान कारणसदृश हि कार्यमेकत्वात् ॥
अस्त्यनतिगोरसत्व दधिदुग्धावस्थयोर्यथाऽध्यक्षात् ॥६॥
सुन्दोपसुन्दमल्लद्वैत दृष्टान्ततो प्रतिज्ञातम् ॥
तदसदसत्त्वापत्तेरितरेतरनियतदोषत्वात् ॥ ७ ॥
सत्युपसु दे सुन्दो भवति च सुन्दे किलोपसुन्दोऽपि ॥
एकस्यापि न सिद्धि' क्रियाफल वा सदाऽऽत्ममुखदोषात्
अथ चेदनादिसिध्द कृतकत्वापह्नवात्तदेवेह ॥
तदपि न तद्वैत किल त्यक्त दोषास्पद यदत्रैतत् ॥ ९ ॥
दृष्टान्ताभासा इति निक्षिप्ता स्वेष्टसाध्यशून्यत्वात् ॥
कश्यो पक्षेपत्र इव दृष्टान्तास्तत्र यथा प्रशस्यन्ते ॥१०॥

सत्परिणामाद्वैत स्यादविभिन्नप्रदेशव वाद्वै ॥
सत्परिणामद्वैतं स्यादपि दीपप्रकाशयोरेव ॥ ११ ॥
अथवा जलकल्लोलवदद्वैत द्वैतमपि च तद्द्वैतम् ॥
उन्मज्जच निमज्जन्नाप्युन्मज्जन्निमज्जदेवेति ॥ १२ ॥
घटमृत्तिकयोरिव वा द्वैत तद्द्वैतवदद्वैतम् ॥
नित्य मृण्मात्रतया यदनित्य घटत्वमात्रतया ॥ १३ ॥
अयमर्थः सन्नित्य तदभिज्ञैर्यथा तदेवेदम् ॥
न तदेवेद नियमादिति प्रतीतेश्च सन्ननित्य स्यात् ॥१४॥
अप्युभययुक्तिवशादेक सच्चैककालमेकोक्तेः ॥
अप्यनुभय सदेतन्नयप्रमाणादिवादशून्यत्वात् ॥ १५ ॥
व्यस्त सन्नययोगान्नित्ये नित्यत्वमात्रतस्तस्य ॥
अपि च समस्त सदिति प्रमाणसापेक्षतो विवक्षायाः १६
न विरुध्द क्रमवर्ति च सदिति तयोऽनादितोऽपि परिणामि
अक्रमवर्ति सदित्यपि न विरुद्धं सदेकरूपत्वात् ॥ १७ ॥
ननु किमिह जगदशरण विरुध्दधर्मद्वयाधिरोपत्वात् ॥
स्वयमपि संशयदोलान्दोलित इव चलितप्रतीतिः स्यात्
इह कश्चिज्जिज्ञासुर्नित्यं सदिति प्रतीयमानोऽपि ॥
सदनित्यमिति विपक्षे सति शल्ये स्यात्कथं हि निःशल्यः

इच्छन्नपि सदनित्य भवति न निश्चितमना जन' कश्चित्
जीवदवस्थत्वादिह सन्नित्य तद्विरोधिनोऽध्यक्षात् ॥२०॥
तत एव दुरधिगम्यो न श्रेय श्रेयसे ह्यनेकान्त ॥
अप्यात्ममुखदोषात्सव्यभिचारो यतोऽचिरादिति चेत्२१
तन्न यतस्तदभावे बलवानस्तीह सर्वथैकान्तः ॥
सोऽपि च सदनित्य वा सन्नित्य वा न साधनायालम् ॥
सन्नित्य सर्वसमादिति पक्षे विक्रिया कुतो न्यायात् ॥
तदभावेऽपि न तत्त्व क्रियाफल कारकाणि यावदिति
परिणाम सदवस्थाकर्मत्वाद्विक्रियेति निर्देश. ॥
तदभावे सदभावो नासिद्ध. सुप्रसिद्धदृष्टान्तात् ॥ २४ ॥
अथ तद्यथा पटस्य क्रिया प्रसिद्धेति तन्तुसंयोगः ॥
भवति पटाभाव' किल तदभावे यथा तदनन्यात् ॥२५ ॥
अपि साधन क्रिया स्याद् स्वर्गस्तत्फल प्रमाणत्वात् ॥
तत्कर्ता नाकारकमेतत्सर्वं न विक्रियाभावात् ॥ २६ ॥
ननु का नो हानि. स्यात्द्भवतु तथा कारकाद्यभावश्च ॥
अर्थात्सन्नित्यं किल न ह्यौषधमातुरे तमनुवर्ति ॥ २७ ॥
सत्य सर्वमनीषितमेतत्तदभाववादिना यावत् ॥
यत्सच्चत्क्षणिकादिति यावन्नोदेति जलदद्दृष्टान्त' ॥ २८ ॥

अयमप्यात्मरिपु' स्यात्सदनित्यं सर्वथेति किल पक्षः ॥
प्रागेव सतो नाशादपि प्रमाण क्व तत्फल यस्मात् ॥२९॥
अपि यत्सदिति वचो भवति च निग्रहकृते स्वतस्तस्य ॥
यस्मात्सदिति कुतः स्यात्सिद्ध तच्छून्यवादिनामिह हि ॥
अपि च सदमन्यमानः कथमिव तदभावसाधनायालम् ॥
वन्ध्यासुत हिनस्मीत्यध्यवसायादिवध्यलोकत्वात् ॥ ३१ ॥
अपि यत्सत्तन्नित्य तत्साधनमिह यथा तदेवेदम् ॥
तदभिज्ञानसमक्षात्क्षणिकैकान्तस्य बाधकं च स्यात् ॥३२॥
क्षणिकैकान्तवदित्यपि नित्यैकान्ते न तत्त्वसिद्धिः स्यात् ॥
तस्मान्न्यायागतमिति नित्यानित्यात्मक स्वतस्तत्त्वम् ३३
ननु चैक सदिति स्यात्किमनेक स्यादथोभय चैतत् ॥
अनुभयमिति किं तत्त्व शेष पूर्ववदथान्यथा किमिति ३४
सत्य सदेकमिति वा सदनेक चोभय च नययोगात् ॥
न च सर्वथा सदेक सदनेक वा सदप्रमाणत्वात् ॥ ३५ ॥
अथ तद्यथा सदेक स्यादविभिन्नप्रदेशवत्त्वाद्वा ॥
गुणपर्यायांशैरपि निरंशदेशादखण्डसामान्यात् ॥ ३६ ॥
द्रव्येण क्षेत्रेण च कालेनापीह चाथ भावेन ॥
सदखण्डो नियमादिति यथाऽधुना वक्ष्यते हि तल्लक्ष्म ३७

गुणपर्ययवद्द्रव्य तद्गुणपर्ययवपु सदेक स्यात् ॥
न हि किञ्चिद्गुणरूप पर्ययरूप च किञ्चिदशांशै' ॥३८॥
रूपादितन्तुमानिह यथा पटः स्यात्स्वय हि तद्द्वैतम् ॥
न हि किञ्चिद्रूपमय तन्तुमय स्यात्तदशगर्भांशैः ॥ ३९ ॥
न पुनर्गोरसवदिद नानासत्त्वैकसत्त्वसामा यम् ॥
सम्मिलितावस्थायामपि घृतरूप च जलमय किंचित् ४०
अपि यदनन्यविवेचनमिह न स्याद्वा प्रयोजक यस्मात् ॥
क्वचिदश्मनि तद्भावान्माभूत्कनकोपलद्वयाद्द्वैतम् ॥४१॥
तस्मादेकत्व प्रति प्रयोजक स्यादखण्डवस्तुत्वम् ॥
प्रकृत यथा सदेक द्रव्येणाखण्डित मत तावत् ॥ ४२ ॥
ननु यदि सदेव तत्त्व स्वय गुण पर्यय स्वय सदिति ॥
शेष स्यादन्यतरस्तदितरलोपस्य दुर्निवारत्वात् ॥ ४३ ॥
न च भवति तथाऽवश्यभावात्समुदयस्य निर्देशात् ॥
तस्मादनन्यमिद छायादर्शवदनेकहेतु' स्यात् ॥ ४४ ॥
सत्य सदनेक स्यादपि तद्धेतुश्च यथा प्रतीतत्वात् ॥
न च भवति यथेच्छ तच्छायादर्शवदसिद्धदृष्टान्तात् ४५
प्रतिबिम्ब' किल छाया वदनादर्शादिसन्निकर्षाद्वै ॥
आदर्श सा स्यादिति पक्षे सदसदिव वाऽन्वयाभाव. ४६

यदि वा सा तदनस्य स्यादिति पक्षोऽसमीक्ष्यकारित्वात्
व्यतिरेकाभावः किल भवति तदास्यस्य सतोऽप्यछायत्वात्
एतेन निरस्तोऽभून्नानासत्त्वैकसत्त्ववादीति ॥
प्रत्येकमनेकम्प्रति सद्द्रव्यं सगुणो यथेत्यादि ॥ ४८ ॥
क्षेत्र प्रदेश इति वा सदधिष्ठान च भूर्निवासश्च ॥
तदपि स्वय सदेव स्यादपि यावन्न सत्प्रदेशस्थम् ॥४९॥
अथ ते त्रिधा प्रदेशाः क्वचिन्निरंशैकदेशमात्राशात् ॥
क्वचिदपि च पुनरसंख्यदेशमय पुनरनन्तदेशवपुः ॥५०॥
ननु च द्व्यणुकादि यथा स्यादपि संख्यातदेशि सत्त्विति चेत्
न यतः शुद्धादेशैरुपचारस्याविवक्षितत्वाद्वा ॥ ५१ ॥
अयमर्थः सद्वेत्या यथैकदेशीत्यनेकदेशीति ॥
एकमनेकं च स्यात्प्रत्येकं तन्न तद्द्वयान्न्यायात् ॥ ५२ ॥
अथ यस्य यदा यावन्यनेकदेशे यथास्थित सदिति ॥
तत्तावत्तस्य तदा तथा समुदित च सर्वदेशेषु ॥ ५३ ॥
इत्यनवद्यमिदं स्याल्लक्षणमुद्देशि तस्य तन्न यथा ॥
क्षेत्रेणाखण्डितत्वात्सदेकमित्यत्र नयविभागोऽयम् ॥५४॥
न पुनश्चैकापवरकसञ्चारितानेकदीपवत्सदिति ॥
हि यथा दीपसमृद्धौ प्रकाशवृद्धिस्तथा न सद्वृद्धिः ५५

गुणपर्ययवद्द्रव्य तद्गुणपर्ययवपु' सदेक स्यात् ॥
न हि किञ्चिद्गुणरूप पर्ययरूप च किञ्चिदंशांशैः ॥३८॥
रूपादितन्तुमानिद यथा पट स्यात्स्वय हि तद्द्वैतम् ॥
न हि किञ्चिद्रूपमय त तुमय स्याच्चदंशगर्भांशैः ॥ ३९ ॥
न पुनर्गोरसवदिद नानासत्त्वैकसत्त्वसामान्यम् ॥
सम्मिलितावस्थायामपि घृतरूप च जलमय किंचित् ४०
अपि यदसत्यविवेचनमिह न स्याद्वा प्रयोजक यस्मात् ॥
क्वचिदश्मनि तद्भावाभावाभूत्कनकोपलद्वयाद्द्वैतम् ॥४१॥
तस्मादेकत्व प्रति प्रयोजक स्यादखण्डवस्तुत्वम् ॥
प्रकृत यथा सदेक द्रव्येणाखण्डित मत तावत् ॥ ४२ ॥
ननु यदि सदेव तत्त्व स्वय गुण पर्यय' स्वय सदिति ॥
शेष स्यादन्यतरस्तदितरलोपस्य दुर्निवारत्वात् ॥ ४३ ॥
न च भवति तथाऽवश्यभावात्समुदयस्य निर्देशात् ॥
तस्मादनवद्यमिद छायादर्शवदनेकहेतु स्यात् ॥ ४४ ॥
सत्य सदनेक स्यादपि तद्धेतुश्च यथा प्रतीतत्वात् ॥
न च भवति यथेच्छ तच्छायादर्शवदसिद्धदृष्टान्तात् ४५
प्रतिबिम्बः किल छाया वदनादर्शादिसन्निकर्षाद्वै ॥
आदर्शे सा स्यादिति पक्षे सदसदिव वाऽन्वयाभाव. ४६

यदि वा सा यदनस्य स्यादिति पक्षोऽसमीक्ष्यकारित्वात्
व्यतिरेकाभावः किल भवति तदास्यस्य सतोऽप्यछायत्वात्
एतेन निरस्तोऽभून्नानासर्वंकसत्त्ववादीति ॥
प्रत्येकमनेकम्प्रति सद्द्रव्यं सन्गुणो यथेत्यादि ॥ ४८ ॥
क्षेत्र प्रदेश इति वा सदधिष्ठान च भूर्निवासश्च ॥
तदपि स्वय सदेत्र स्यादपि यावन्न सत्प्रदेशस्थम् ॥४९॥
अथ ते त्रिधा प्रदेशाः कचिन्निरंशैकदेशमात्राशात् ॥
कचिदपि च पुनरसख्यदेशमय पुनरनन्तदेशवपुः ॥५०॥
ननु च ह्यणुकादि यथा स्यादपि सख्यातदेशि सत्त्विति चेत्
न यतः शुद्धादेशैरुपचारस्याविवक्षितत्वाद्वा ॥ ५१ ॥
अयमर्थः सद्द्वेधा यथैकदेशीत्यनेकदेशीति ॥
एकमनेक च स्यात्प्रत्येक तन्न तद्द्वयान्न्यायात् ॥ ५२ ॥
अथ यस्य यदा यावद्यनेकदेशे यथास्थित सदिति ॥
तत्तावत्तस्य तदा तथा समुदित च सर्वदेशेषु ॥ ५३ ॥
इत्यनवद्यमिद स्याल्लक्षणमुद्देशि तस्य तन्न यथा ॥
क्षेत्रेणाखण्डितत्वात्सदेकमित्यत्र नयविभागोऽयम् ॥५४॥
न पुनश्चैकापवरकसञ्चारितानेकदीपवत्सदिति ॥
हि यथा दीपसमृद्धौ प्रकाशवृद्धिस्तथा न सद्वृद्धिः ५५

अपि तत्र दीपशमने कस्मिंश्चित्तत्प्रकाशहानिः स्यात् ॥
न तथा स्यादविवक्षितदेशे तद्धानिरेकरूपत्वात् ॥ ५६ ॥
नात्र प्रयोजकं स्यान्नियतनिजाभोगदेशमात्रत्वम् ॥
तदनन्यथात्वसिद्धौ सदनेकं क्षेत्रतः कथं स्याद्वा ॥५७॥
सदनेकं देशानामुपसंहारात्प्रसर्पणादिति चेत् ॥
न यतो नित्यविभूनां व्योमादीनां न तद्धि तदयोगात् ॥
अपि परमाणोरिह वा कालाणोरेकदेशमात्रत्वात् ॥
कथमिव सदनेकं स्यादुपसंहारप्रसर्पणाभावात् ॥ ५९ ॥
ननु च सदेकं देशैरिव संख्या खण्डयितुमशक्यत्वात् ॥
अपि सदनेकं देशैरिव संख्यानेकतो नयादिति चेत् ॥
न यतोऽशक्यविवेचनमेकक्षेत्रावगाहिनां चास्ति ॥
एकत्वमनेकत्वं न हि तेषां तथाऽपि तदयोगात् ॥६१॥
ननु ते यथा प्रदेशाः सन्ति मिथो गुम्फितैकसूत्रत्वात्
न तथा सदेकत्वादेकक्षेत्रावगाहिनः सन्ति ॥ ६२ ॥
सत्यं तत्र निदानं किमिति तदन्वेषणीयमेव स्यात् ॥
तेनाखण्डितमिव सत्स्यादेकमनेकदेशवत्त्वेऽपि ॥ ६३ ॥
ननु तत्र निदानमिदं परिणममाने यदेकदेशेऽस्य ॥
वेणोरिव पर्वसु किल परिणमनं सर्वदेशेषु ॥ ६४ ॥

अपि सर्वथा सदेकं स्यादिति पक्षो न साधनायालम् ॥
इह तदन्वयवाभावे नियमात्सदन्वयविनोऽप्यभावत्वात् ॥१
अपि सदनेकं स्यादिति पक्षः कुशलो न सर्वथेति यतः ॥
एकमनेकं स्यादिति नानेकं स्यादनेकमेकैकात् ॥ २ ॥
उक्तं सदिति यथा स्यादेकमनेकं सुसिद्धदृष्टान्तात् ॥
अधुना तद्वाच्यात्रं प्रमाणनयलक्षणं वक्ष्ये ॥ ३ ॥
इत्युक्तलक्षणेऽस्मिन्विरुद्धधर्मद्वयात्मके तत्त्वे ॥
तत्राप्यन्यतरस्य स्यादिह धर्मस्य वाचकश्च नयः ॥ ४ ॥
द्रव्यनयो भावनयः स्यादिति भेदाद्द्विधा च सोऽपि यथा
पौद्गलिकः किल [illegible]ो द्रव्य भावश्च चिदिति जीवगुणः

तस्मान्नवयमिद भावेनाखण्डित सदेक स्यात् ॥
तदपि विवक्षावशत स्यादिति सर्व न सर्वथेति नयात् ॥
एव भवति सदेक भवति न तदपि न निरंकुश किन्तु ॥
सदनेक स्यादिति किल सप्रतिपक्ष यथा प्रमाणाद्वा ॥
अपि च स्यात्सदनेक तद्द्रव्याद्यैरखण्डितत्वेऽपि ॥
व्यतिरेकेण विना यन्नान्वयपक्ष. स्वपक्षरक्षार्थम् ॥ ९४ ॥
अस्ति गुणस्तल्लक्षणयोगादिह पर्ययस्तथा च स्यात् ॥
तदनेकत्वं नियमात्सदनेक द्रव्यत' कथं न स्यात् ॥९५॥
यन्सच्चदेकदेशे तद्देशेन तद्द्वितीयेपु ॥
अपि तद्द्वितीयदेशे सन्नेक क्षेत्रतश्च को नेच्छेत् ॥९६॥
यत्सच्चदेककाले तत्तत्काले न तदितरत्र पुन ॥
अपि सच्चदितरकाले सदनेक कालतोऽपि तदवश्यम् ९७
तन्मात्रत्वादेको भावो य स न तदन्यभाव. स्यात ॥
भवति च तदन्यभाव सदनेक भावतो भवेन्नियतम् ९८
शेषो विधिरुक्तत्वादत्र न निर्दिष्ट एव दृष्टान्त ॥
अपि गौरवप्रसङ्गाद्वा पुनरुक्तदोषभयात् ॥९९॥
तस्माद्यदिह सदेक सदनेक स्यात्तदेव युक्तिवशात् ॥
अन्यतरस्य विलोपे शेषविलोपस्य दुर्निवारत्वात् ५००

अपि सर्वथा सदेक स्यादिति पक्षो न साधनायालम् ॥
इह तदवयवाभावे नियमात्सदवयविनोऽप्यभावत्वात् ॥१
अपि सदनेकं स्यादिति पक्षः कुशलो न सर्वथेति यतः ॥
एकमनेकं स्यादिति नानेकं स्यादनेकमेकैकात् ॥ २ ॥
उक्तं सदिति यथा स्यादेकमनेकं सुसिद्धदृष्टान्तात् ॥
अधुना तद्वाच्यात्रे प्रमाणनयलक्षणं वक्ष्ये ॥ ३ ॥
इत्युक्तलक्षणेऽस्मिन्विरुद्धधर्मद्वयात्मके तत्त्वे ॥
तत्राप्यन्यतरस्य स्यादिह धर्मस्य वाचकश्च नयः ॥ ४ ॥
द्रव्यनयो भावनयः स्यादिति भेदाद्द्विधा च सोऽपि यथा
पौद्गलिकः किल शब्दो द्रव्यं भावश्च चिदिति जीवगुणः
यदि वा ज्ञानविकल्पो नयो विकल्पोऽस्ति सोऽप्यपरमार्थः
नयतो ज्ञानं गुण इति शुद्धं ज्ञेयं च किन्तु तद्योगात् ॥
ज्ञानविकल्पो नय इति तत्रेयं प्रक्रियाऽपि संयोज्या ॥
ज्ञानं ज्ञानं न नयो नयोऽपि न ज्ञानमिह विकल्पत्वात् ॥
उन्मज्जति नयपक्षो भवति विकल्पो विवक्षितो हि यदा ॥
न विवक्षितो विकल्पः स्वयं निमज्जति तदा हि नयपक्षः
सन्दृष्टिः स्पष्टेयं स्यादुपचाराद्यथा घटज्ञानम् ॥
ज्ञानं ज्ञानं न घटो घटोऽपि न ज्ञानमस्ति स इति घटः ॥

अस्तमितसर्वसङ्करदोषं क्षतसर्वशून्यदोषं वा ॥
अणुरिव वस्तुसमस्तं ज्ञातं भवतीत्यनन्यशरणमिदम् ॥ २८
अपि चासद्‌भूतादिर्व्यवहारान्तो नयश्च भवति यथा ॥
अन्यद्रव्यस्य गुणाः सञ्जायन्ते बलादनन्यत्र ॥ २९ ॥
स यथा वर्णादिमतो मूर्तद्रव्यस्य कर्म किल मूर्तम् ॥
तत्संयोगत्वादिह मूर्ताः क्रोधादयोऽपि जीवभवाः ॥ ३०
कारणमन्तर्लीना द्रव्यस्य विभावभावशक्तिः स्यात् ॥
सा भवति सहजसिद्धा केवलमिह जीवपुद्गलयोः ॥ ३१ ॥
फलमागन्तुकभावादुपाधिमात्रं विहाय यावदिह ॥
शेषस्तच्छुद्धगुणः स्यादिति मत्वा सुदृष्टिरिह कश्चित् ॥ ३२
अत्रापि च सन्दृष्टिः परगुणयोगाच्च पाण्डुरः कनकः ॥
हित्वा परगुणयोगं स एव शुद्धोऽनुभूयते कैश्चित् ॥ ३३
सद्‌भूतव्यवहारोऽनुपचरितोऽस्ति च तथोपचरितश्च ॥
अपि चासद्‌भूतः सोऽनुपचरितोऽस्ति च तथोपचरितश्च
स्यादादिमो यथान्तर्लीना या शक्तिरस्ति यस्य सतः ॥
तत्तत्सामान्यतया निरूप्यते चेद्विशेषनिरपेक्षम् ॥ ३५ ॥
इदमत्रोदाहरणं ज्ञानं जीवोपजीवि जीवगुणः ॥
ज्ञेयालम्बनकाले न तथा ज्ञेयोपजीवी स्यात् ॥ ३६ ॥

घटसद्भावे हि यथा घटनिरपेक्ष चिदेव जीवगुणः ॥
अस्ति घटाभावेऽपि च घटनिरपेक्षं चिदेव जीवगुणः ॥३७
एतेन निरस्त यन्मतमेतत्सति घटे घटज्ञानम् ॥
असति घटे न ज्ञान न घटज्ञान प्रमाणशून्यत्वात् ॥ ३८ ॥
फलमास्तिक्यनिदान सद्द्रव्ये वास्तवप्रतीतिः स्यात् ॥
भवति क्षणिकादिमते परमोपेक्षा यतो विनाऽऽयासात्
उपचरितः सद्भूतो व्यवहारः स्यान्नयो यथा नाम ॥
अविरुद्ध हेतुवशात्परतोऽप्युपचर्यते यथा स्वगुणः ॥ ४०
अर्थविकल्पो ज्ञान प्रमाणमिति लक्ष्यतेऽधुनाऽपि यथा ॥
अर्थः स्वपरनिकायो भवति विकल्पस्तु चित्तदाकारम् ॥
असदपि लक्षणमेतत्सन्मात्रत्वे सुनिर्विकल्पत्वात्
तदपि न विनावलम्बान्निर्विषयं शक्यते वक्तुम् ॥ ४२ ॥
तस्मादनन्यशरण सदपि ज्ञानं स्वरूपसिध्दत्वात् ॥
उपचरितं हेतुवशात्तदिह ज्ञान तदन्यशरणमिव ॥ ४३ ॥
हेतुः स्वरूपसिद्धि विना न परसिध्दिरप्रमाणत्वात् ॥
तदपि च शक्तिविशेषाद्द्रव्यविशेषो यथा प्रमाणं स्यात्
अर्थो ज्ञेयज्ञायकसंकरदोषभ्रमक्षयो यदि वा ॥
अविनाभावात्साध्यं सामान्यं साधको विशेषः स्यात् ४५

ननु सति गृहवनितादौ भवति सुखं प्राणिनामिहाध्यक्षात्
असति च तत्र न तदिदं तत्तत्कर्ता स एव तद्भोक्ता ॥
सत्यं वैषयिकमिदं परमिह तदपि न परत्र सापेक्षम् ॥
सति बहिरर्थेऽपि यतः किल केषाञ्चिदसुखादिहेतुत्वात्
इदमत्र तात्पर्यं भवतु स कर्ताऽथ वा च मा भवतु ॥
भोक्ता स्वस्य परस्य च यथाकथञ्चिच्चिदात्मको जीवः ॥
अयमपि च नयाभासो भवति मिथो बोध्यबोधसम्बन्धः
ज्ञानं ज्ञेयगतं वा ज्ञानगतं ज्ञेयमेतदेव यथा ॥ ८५ ॥
चक्षू रूपं पश्यति रूपगतं तन्न चक्षुरेव यथा ॥
ज्ञानं ज्ञेयमवैति च ज्ञेयगतं वा न भवति तज्ज्ञानम् ॥ ८६
इत्यादिकाश्च बहवः सन्ति यथालक्षणा नयाभासाः ॥
तेषामयमुद्देशो भवति विलक्ष्यो नयान्नयाभासः ॥ ८७ ॥
ननु सर्वतो नयास्ते किंनामानोऽथ वा कियन्तश्च ॥
कथमिव मिथ्यार्थास्ते कथमिव ते सन्ति सम्यगुपदेश्याः
सत्यं यावदनन्ताः सन्ति गुणा वस्तुनो विशेषाख्याः ॥
तावन्तो नयवादा वचोविलासा विकल्पाख्याः ॥ ८९ ॥
अपि निरपेक्षा मिथ्यास्त एव सापेक्षका नयाः सम्यक्
अविनाभावत्वे सति सामान्यविशेषयोश्च सापेक्षात् ९९०

सापेक्षत्वं नियमादविनाभावस्त्वनन्यथासिद्धः ॥
अविनाभावोऽपि यथा येन विना जायते न तत्सिद्धिः ॥
अस्त्युक्तो यस्य सतो यन्नामा यो गुणो विशेषात्मा ॥
तत्पर्यायविशिष्टास्तन्नामानो नया यथाऽऽम्नायात् ॥९२॥
अस्तित्वं नाम गुणः स्यादिति साधारणः सतस्तस्य ॥
तत्पर्यायश्च नयः समासतोऽस्तित्वनय इति वा ॥ ९३ ॥
कर्तृत्वं जीवगुणोऽस्त्वथ वैभाविकोऽथवा भावः ॥
तत्पर्यायविशिष्टः कर्तृत्वनयो यथा नाम ॥ ९४ ॥
अनया परिपाट्या किल नयचक्रं यावदस्ति बोद्धव्यम् ॥
एकैकं धर्मं प्रति नयोऽपि चैकैक एव भवति यतः ॥९५॥
सोदाहरणो यावान्नयो विशेषणविशेषरूपः स्यात् ॥
व्यवहारापरनामा पर्यायार्थो नयो न द्रव्यार्थः ॥ ९६ ॥
ननु चोक्तलक्षणः इति यदि न द्रव्यार्थिको नयो नियमात्॥
कोऽसौ द्रव्यार्थिक इति पृष्टास्तच्चिह्नमाहुराचार्याः॥ ९७ ॥
व्यवहारः प्रतिषेध्यस्तस्य प्रतिषेधकश्च परमार्थः ॥
व्यवहारप्रतिषेधः स एव निश्चयनयस्य वाच्यः स्यात् ९८॥
व्यवहारः स यथा स्यात्सद्द्रव्यं ज्ञानवांश्च जीवो वा ॥
नेत्येतावन्मात्रो भवति स निश्चयनयो नयाधिपतिः ॥९९.

ननु सति गृहवनितादौ भवति सुखं प्राणिनामिहाध्यक्षात्
असति च तत्र न तदिदं तत्तत्कर्ता स एव तद्भोक्ता ॥
सत्यं वैषयिकमिदं परमिह तदपि न परत्र सापेक्षम् ॥
सति बहिरर्थेऽपि यतः किल केषाञ्चिदसुखादिहेतुत्वात्
इदमत्र तात्पर्यं भवतु स कर्ताऽथ वा च मा भवतु ॥
भोक्ता स्वस्य परस्य च यथाकथञ्चिच्चिदात्मको जीवः ॥
अयमपि च नयाभासो भवति मिथो बोध्यबोधसम्बन्धः
ज्ञानं ज्ञेयगतं वा ज्ञानगतं ज्ञेयमेतदेव यथा ॥ ८५ ॥
चक्षू रूपं पश्यति रूपगतं तन्न चक्षुरेव यथा ॥
ज्ञानं ज्ञेयमवैति च ज्ञेयगतं वा न भवति तज्ज्ञानम् ॥ ८६
इत्यादिकाश्च बहवः सन्ति यथालक्षणा नयाभासाः ॥
तेषामयमुद्देशो भवति विलक्ष्यो नयान्नयाभासः ॥ ८७ ॥
ननु सर्वतो नयास्ते किंनामानोऽथ वा कियन्तश्च ॥
कथमिव मिथ्यार्थास्ते कथमिव ते सन्ति सम्यगुपदेश्याः
सत्यं यावदनन्ताः सन्ति गुणा वस्तुनो विशेषाख्याः ॥
तावन्तो नयवादा वचोविलासा विकल्पाख्याः ॥ ८९ ॥
अपि निरपेक्षा मिथ्यास्त एव सापेक्षका नयाः सम्यक्
अविनाभावत्वे सति सामान्यविशेषयोश्च सापेक्षात् ५९०

स हि मिथ्यादृष्टित्वासर्वज्ञाज्ञावमानितो नियमात् ॥६२॥
इदमत्र तु तात्पर्यमधिगन्तव्य चिदादि यद्वस्तु ॥
व्यवहारननिश्चयाभ्यामविरुद्ध यथाऽऽत्मशुध्यर्थम् ॥ ६३
अपि निश्चयस्य नियत हेतु' सामान्यमात्रमिह वस्तु ॥
फलमात्मसिद्धिः स्यात्कर्मकलङ्कावमुक्तबोधात्मा ॥ ६४॥
उक्तो व्यवहारनयस्तदनु नयो निश्चय पृथक् पृथक् ॥
युगपद्द्वय च मिलित प्रमाणमिति लक्षण वक्ष्य ॥६५ ॥

॥ उक्त व्यवहारनयवस्तु ॥

विधिपूर्व प्रतिषेध प्रतिषेधपुरस्सरो विधिस्त्वनयोः ॥
मैत्री प्रमाणमिति वा स्वपराकारावगाहि यज्ज्ञानम् ॥ ६६
अयमर्थोऽर्थविकल्पो ज्ञान किल लक्षण स्वतस्तस्य ॥
एकविकल्पो नयसादुभयविकल्पः प्रमाणमिति बोधः ६७
ननु चास्त्येकविकल्पोऽप्यविरुद्धोभयविकल्प एवास्ति ॥
कथमिव तदेकसमये विरुद्धभावाद्द्वयोर्विकल्पः स्यात् ६८
अथ चेदस्ति विकल्पो क्रमेण युगपद्वा वलाद्वाच्यः ॥
अथ चेत्क्रमेण नय इति भवति न नियमात्प्रमाणमिति दोषः
युगपच्चेदथ न मिथो, विरोधिनोर्यौगपद्य स्यात् ॥
दृष्टिविरुद्धत्वादपि प्रकाशतमसोर्द्वयोरिति चेत् ॥ ७० ॥

ात्मत्यनुभवनादेवाद्वयमात्मानुभूतिरेव भवेद् २
व्यवहार इव प्रकृतो नात्माऽनुभूतिहेतु स्यात् ॥
हमस्य स्वामी सदवश्यम्भाविविकल्पत्वात् ॥ ५४ ॥
िचत्वमिह निश्चयपक्षो यदि विवक्षितो भवति ॥
रान्निरपेक्षो भवति तदाऽऽत्मानुभूतिहेतुः सः ॥५५
सम्भवदोषाद्यतो न कश्चिन्नयो हि निरपेक्ष ॥
च विधौ प्रतिषेध्य प्रतिषेधे सति तने प्रसिद्धत्वात् ॥
: व्यवहारनयो भवति यथाऽनेक एव सांशत्वात् ॥
निश्चयो नय किल तद्वदनेकोऽथ चैककस्त्विति चेत्
यतोऽस्त्यनेको नैक प्रथमोऽप्यनन्तधर्मत्वात् ॥
थेति लक्षणत्वादस्त्येको निश्चयो हि नानेक ॥५८॥
ष्टिः कनकस्य ताम्रोपाधेर्निवृत्तितो यादृक् ॥
( तदपरमिह वा रुक्मोपाधेर्निवृत्तितस्तादृक् ॥ ५९ ॥
हतास्ते ये स्वात्मप्रज्ञापराधत केचित् ॥
ाकनिश्चयनयमनेकमिति सेवयन्ति यथा ॥ ६६० ॥
द्रव्यार्थिक इति स्यादेक शुद्धनिश्चयो नाम ॥
ोप्य शुद्धद्रव्यार्थिक इति तच्छुद्धनिश्चयो नाम ॥६१॥
ादिकाश्च यद्वयो भेदा निश्चयनयस्य यस्य मते ॥

स हि मिथ्यादृष्टित्वात्सर्वज्ञानादमानितो नियमात् ॥६२॥
इदमत्र तु तात्पर्यमधिगन्तव्य चिदादि यद्वस्तु ॥
व्यवहारननिश्चयाभ्यामविरुद्ध यथाऽऽत्मशुद्ध्यर्थम् ॥ ६३ ॥
अपि निश्चयस्य नियत हेतु' सामान्यमात्रमिद वस्तु ॥
फलमात्मसिद्धि, स्यात्कर्मकलङ्कावमुक्तबोधात्मा ॥ ६४॥
उक्तो व्यवहारनयस्तदनु नयो निश्चय' पृथक् पृथक् ॥
युगपद्द्वय च मिलित प्रमाणमिति लक्षण वक्ष्य ॥६५ ॥

॥ उक्त व्यवहारनयवस्तु ॥

विधिपूर्वः प्रतिषेध, प्रतिषेधपुरस्सरो विधिस्त्वनयोः ॥
मैत्री प्रमाणमिति वा स्वपराकाराचगाहि यद्ज्ञानम् ॥ ६६
अयमर्थोऽर्थविकल्पो ज्ञान किल लक्षण स्वतस्तस्य ॥
एकविकल्पो नयसादुभयविकल्पः प्रमाणमिति बोधः ६७,
ननु चास्त्येकविकल्पोऽप्यविरु द्धोभयविकल्प एवास्ति ॥
कथमिव तदेकसमये विरुद्धभावाद्वयोर्विकल्पः स्यात् ६८
अथ चेदस्ति विकल्पो क्रमेण युगपद्वा बलाद्वाच्यः ॥
अथ चेत्क्रमेण नय इति भवति न नियमात्प्रमाणमिति दोषः
युगपच्चेदथ न मिथो विरोधिनोर्योगपद्य स्यात् ॥
दृष्टिविरुद्धत्वादपि प्रकाशतमसोर्द्वयोरिति चेत् ॥ ७० ॥

न यतो युक्तिविशेषाद्युगपद्वृत्तिविरोधिनामस्ति ॥
सदनेकेषामिह भावाभावध्रुवाध्रुवाणां च ॥ ७१॥
अयमर्थो जीवादौ प्रकृतपरामर्शपूर्वकं ज्ञानम् ॥
यदि वा सदभिज्ञानं यथा हि सोऽयं बलाद्द्व्यामर्शी ॥ ७२
सोऽयं जीवविशेषो यः सामान्येन सदिति वस्तुमयः ॥
संस्कारस्य वशादिह सामान्यविशेषजं भवेज्ज्ञानम् ॥ ७३
अप्युपयोगि ज्ञानं सामान्यविशेषयोः समं सम्यक् ॥
ननु चैवं नययुग्मं व्यस्तं नय एव न प्रमाणं स्यात् ॥
तदिह समस्तं योगात्प्रमाणमिति केवलं न नयः ॥ ७४ ॥
तन्न यतो नययोगादतिरिक्तरसान्तरं प्रमाणमिदम् ॥
लक्षणविषयोदाहृतिहेतुफलाख्यादिभेदभिन्नत्वात् ॥ ७५ ॥
तत्रोक्तंलक्षणमिह सर्वस्वग्राहकं प्रमाणमिति ॥
विषयो वस्तु समस्तं निरंशदेशादिभूरुदाहरणम् ॥ ७६ ॥
हेतुस्तत्त्वबुभुत्सोः सन्दिग्धस्याथवा च बालस्य ॥
सार्थमनेकं द्रव्यं हस्तामलकवद्वेतु कामस्य ॥ ७७ ॥
फलमस्यानुभवः स्यात्समक्षमिव सर्ववस्तुजातस्य ॥
आख्या प्रमाणमिति किल भेदः प्रत्यक्षमथ परोक्षं च ७८
ज्ञानविशेषो नय इति ज्ञानविशेषः प्रमाणमिति नियमात् ॥

उभयोरन्तर्भेदो विषयविशेषान्न वस्तुतो भेदः ॥ ७९ ॥
स यथा विषयविशेषो द्रव्यैकांशो नयस्य योऽन्यतम. ॥
साऽप्यपरस्तदपर इह निखिल विषयप्रमाणजातस्य ॥८०
यदनेकनयसमूहे सङ्ग्रहकरणादनेकधर्मत्वम् ॥
तत्सदपि न सदिव यतस्तदनेकस विरुद्धधर्ममयम् ॥
यदनेकांशग्राहकमिह प्रमाण न प्रत्यनीकतया ॥
प्रत्युत मैत्रीभावादिति नयभेदाददः प्रभिन्न स्यात् ॥ ८२
ननु युगपदुच्यमान नययुग्म तद्यथाऽस्ति नास्तीति ॥
एको भङ्गः कथमयमेकांशग्राहको नयो नान्यत् ॥ ८३ ॥
अपि चास्ति न चास्तीति सममेकोक्त्या प्रमाणनाशः स्यात्
अथ च क्रमेण यदि वा स्वस्य रिपुः स्वयमहो स्वनाशाय
अथवाऽवक्तव्यमयो वक्तुमशक्यात्सम स चेद्भङ्ग' ॥
पूर्वापरबाधाया. कुत' प्रमाणात्प्रमाणमिह सिध्येत् ॥ ८५
इदमपि वक्तुमयुक्त वक्ता नय एव न प्रमाणमिह ॥
मूलविनाशाय यतो वक्तरि क्लि चेदवाच्यतादोष. ॥
नैव यत' प्रमाण भङ्गात्प्रसादभङ्गबोधवपुः ॥
भङ्गात्मको नय इति यावानिह तदंशधर्मत्वात् ॥ ८७ ॥
समयोऽस्ति नास्तीति च क्रमेण युगपच्च वाऽनयोर्भङ्गः ॥

स्यादविचारितरम्य विचार्यमाण खपुष्पवत्सर्वम् ॥ २५॥
अर्थाद्यथाकथञ्चिज्ज्ञानादन्यत्र न प्रमाणत्वम् ॥
करणादि विना ज्ञानादचेतन क' प्रमाणयति ॥ २६ ॥
तत्रान्तर्लीनत्वाज्ज्ञानसनाथ प्रमाणमिदमिति चेत् ॥
ज्ञान प्रमाणमिति यत्प्रकृत न कथ प्रतीयेत ॥ २७ ॥
ननु फलभूत ज्ञान तस्य तु करण भवेत्प्रमाणमिति ॥
ज्ञानस्य कृतार्थत्वात्फलवत्त्वमसिध्दमिदमिति चेत् ॥ २८॥
नैव यत प्रमाण फल च फलवच्च तत्स्वय ज्ञानम् ॥
दृष्टिर्यथा प्रदीप स्वयमप्रकाश प्रकाशकश्च स्यात् ॥२९॥
उक्त च कदाचिदिन्द्रियमथ च तदर्थेन सन्निकर्षयुतम् ॥
भवति कदाचिज्ज्ञान त्रिविध करण प्रमायाश्च ॥ ७३० ॥
पूर्व पूर्व करण तत्र फल चोत्तर नैवम् ॥
न्यायात्सिध्दमिद चित्फल च फलवच्च तत्स्वय ज्ञानम् ॥
तत्रापि यदा करण ज्ञान फलसिद्धिरस्ति नाम तदा ॥
अविनाभावेन विना हानोपादानबुद्धिसिद्धिरसि दलात् ॥३२॥
नाप्येतत्प्रसिध्द सा यनमा पद्वयो सदृष्टान्तात् ॥
न विना ज्ञानात्त्यागो भुजगादेर्वा स्रगादिसादानम् ॥३३॥
उक्त प्रमाणलक्षणमिह यदनार्हत कुवादिभि. स्वरसात्

सदलक्षणदोषत्वाच्तत्सर्वं लक्षणाभासम् ॥ ३४ ॥
स यथा चेत्प्रमाणं लक्ष्य तल्लक्षणं प्रमाकरणम् ॥
अव्याप्तिको दोषः सदेश्वरे चापि तदयोगात् ॥ ३५ ॥
योगिज्ञानेऽपि तथा न स्यात्तल्लक्षणं प्रमाकरणम् ॥
परमाण्वादिषु नियमान्न स्यात्तत्सन्निकर्षश्च ॥ ३६ ॥
वेदाः प्रमाणमत्र तु हेतुः केवलमपौरुषेयत्वम् ॥
आगमगोचरताया हेतोरन्याश्रितादहेतुत्वम् ॥ ३७ ॥
एवमनेकविधं स्यादिह मिथ्यामतकदम्बकं यावत् ॥
अनुपादेयमसारं वृन्दे स्याद्वादवेदिभिः समयात् ॥ ३८ ॥
उक्तं प्रमाणलक्षणमनुभवगम्यं यथाऽऽगमज्ञानात् ॥
अधुना निक्षेपपदं सङ्क्षेपाल्लक्ष्यते यथालक्ष्म ॥ ३९ ॥
ननु निक्षेपो न नयो न च प्रमाणं न चांशकं तस्य ॥
पृथगुद्देशत्वादपि पृथगिव लक्ष्यं स्वलक्षणादिति चेत् ४०
सत्यं गुणसापेक्षो सविपक्षः स च नयः स्वयं क्षिपति ॥
य इह गुणाक्षेपः स्यादुपचरितः केवलं स निक्षेपः ॥४१॥
निक्षेपः स चतुर्धा नाम ततः स्थापना ततो द्रव्यम् ॥
भावस्तल्लक्षणमिह भवति यथा लक्ष्यतेऽधुना चार्थात् ४२
यस्तु यतद्गुणे खलु सञ्ज्ञाकरणं जिनो यथा नाम ॥

यदिद नास्ति स्वरूपाभावादस्ति स्वरूपसद्भावात् ॥
यदि वाच्यात्ययरचित वाच्य सर्वप्रमाण पक्षस्य ॥ ६१ ॥
उत्पद्यते विनश्यति सदिति यथास्व प्रतिक्षण यावत् ॥
व्यवहारविशिष्टोऽय नियतमनित्यो नय प्रसिद्ध स्यात् ॥
नोत्पद्यते विनश्यति ध्रुवमिति सत्स्यादनन्यथावृत्ते. ॥
व्यवहारान्तर्भूतो नय स नित्योऽप्यनन्यशरणः स्यात् ॥
न विनश्यति वस्तु यथा वस्तु तथा नैव जायते नियमात्
स्थितिमेति न केवलमिह भवति स निश्चयनयस्य पक्षश्च ॥
यदिद नास्ति विशेष' सामान्यस्याविवक्षया तदिदम् ॥
उन्मज्जत्सामान्यैरस्ति तदेतत्प्रमाणमविशेषात् ॥ ६४ ॥
• अभिनवभावपरिणतेर्योऽयमपूर्वः समयो वस्तुनि ॥
इति यो वदति स कश्चित्पर्यायार्थिकनयेष्वभावनय. ६५
परिणममानेऽपि तथाभूतैर्भावैर्विनश्यमानेऽपि ॥
नायमपूर्वो भाव' पर्यायार्थिकविशिष्टभावनय ॥ ६६ ॥
शुद्धद्रव्यादेशादभिनवभावो न सर्वतो वस्तुनि ॥
नाप्यनभिनवश्च यत स्यादभूतपूर्वो नभूतपूर्वो वा ॥
अभिनवभावैर्यदिद परिणममान प्रतिक्षण यावत् ॥
असदुत्पन्न न हि तत्सन्नष्ट वा न प्रमाणमतमेतत् ॥ ६२॥

इत्यादि यथासम्भवमुक्तमिवानुक्तमपि च नयचक्रम् ॥
योज्य यथाऽऽगमादिह प्रत्यक्रमनेकभावयुतम् ॥ ७७० ॥

॥ इति द्रव्यसामान्यप्ररूपणम् ॥

सिध्दं विशेषवद्वस्तु सत्सामान्य स्वतो यथा ॥ नासिध्दो धातुसञ्ज्ञोऽपि कश्चित्पीतमितोऽपरः ॥ १ ॥ बहुव्यापकमेवैतत्सामान्य सदृशत्वत' अस्त्यल्पव्यापको यस्तु विशेष' सदृशेतरः ॥ २ ॥ जीवाजीवविशेषोऽस्ति द्रव्याणां शब्दतोऽर्थतः ॥ चेतनालक्षणो जीव' स्यादजीवोऽप्यचेतन. ॥ ३ ॥ नासिध्द सिध्दद्दृष्टान्ताचेतनाचेतन द्वयम् ॥ जीवद्वपुर्घटादिभ्यो विशिष्ट कथमन्यथा ॥ ४ ॥ अस्ति जीवः सुखादीना संवेदनसमक्षत. ॥ यो नैव स न जीवोऽस्ति सुप्रसिध्दो यथा घटः ॥ ५ ॥ इति हेतुसनाथेन प्रत्यक्षेणावधारितः ॥ सा यो जीवस्स्वसिध्द्यर्थमजीवश्च ततोऽन्यथा ॥ ६ ॥ मूर्तामूर्तविशेषश्च द्रव्याणा स्यान्निसर्गतः ॥ मूर्तं स्यादिन्द्रियग्राह्य तदग्राह्यममूर्तिमत् ॥ ७ ॥ न पुनर्वास्तव मूर्तममूर्तं स्यादवास्तवम् ॥ सर्वं शून्यादिदोषाणा सन्निपातात्तथा सति ॥ ८ ॥ स्पर्शो रसश्च गन्धश्च वर्णोऽमी मूर्तिसञ्ज्ञका ॥ तद्योगान्मूर्तिम-

अस्ति जीवः स्वतस्सिद्धोऽनाद्यनन्तोऽप्यमूर्तिमान् ॥ ज्ञाना धनन्तधर्मादिरूढत्वाद्द्रव्यमव्ययम् ॥ ३० ॥ साधारणगुणोपेतोऽप्यसाधारणधर्मभाक् ॥ विश्वरूपोऽप्यविश्वस्थः सर्वपक्षोऽपि सर्ववित् ॥ ३१ ॥ असंख्यातप्रदेशोऽपि स्यादखण्डप्रदेशवान् ॥ सर्वद्रव्यातिरिक्तोऽपि तन्मध्ये संस्थितोऽपि च ॥ ३२ ॥ अथ शुद्धनयादेशाच्छुद्धश्चैक विधोऽपि यः ॥ स्याद्द्विधा सोऽपि पर्यायान्मुक्तामुक्तप्रभेदात् ॥ ३३ ॥ बद्धो यथा स संसारी स्यादलब्धस्वरूपवान् ॥ मूर्च्छितोऽनादितोऽष्टाभिर्ज्ञानाद्यावृतिकर्मभिः ॥ ३४ ॥ यथाऽनादिः स जीवात्मा यथाऽनादिश्च पुद्गलः ॥ द्वयोर्बन्धोऽप्यनादिः स्यात्सम्बन्धो जीवकर्मणोः ॥ ३५ ॥ द्वयोरनादिसम्बन्धः कनकोपलसन्निभः ॥ अन्यथा दोष एव स्यादितरेतरसंश्रयः ॥ ३६ ॥ तद्यथा यदि निष्कर्मा जीवः प्रागेव तादृशः ॥ बन्धाभावेऽथ शुद्धेऽपि बन्धश्चेन्निर्वृतिः कथम् ॥ ३७ ॥ अथ चेत्पुद्गलः शुद्धः सर्वतः प्रागनादितः ॥ हेतोर्विना यथा ज्ञानं तथा क्रोधादिरात्मनः ॥ ३८ ॥ एवं बन्धस्य नित्यत्वं हेतोः सद्भाववतोऽथ वा ॥ द्रव्याभावो गुणाभावे क्रोधादीनामदर्शनात् ॥ ३९ ॥

तदसिद्धः सिद्धसम्बन्धो जीवकर्मोभयोर्मिथः ॥ सादिसि-
द्धेरसिद्धत्वादसत्सन्दृष्टितश्च तत् ॥ ४० ॥ जीवस्याशुद्ध-
रागादिभावाना कर्म कारणम् ॥ कर्मणस्तस्य रागादि-
भावाः प्रत्युपकारिवत् ॥ ४१ ॥ पूर्वकर्मोदयाद्भावो भावा-
त्प्रत्यग्रसञ्चयः ॥ तस्य पाकात्पुनर्भावो भावाद्बन्धः पुन-
स्ततः ॥ ४२ ॥ एव सन्तानतोऽनादिः सम्बन्धो जीवक
र्मणोः ॥ ससारः स च दुर्मोच्यो विना सम्यग्दृगादिना
॥ ४३ ॥ न केवल प्रदेशानां बन्धः सम्बन्धमात्रतः
॥ सोऽपि भावैरशुद्धैः स्यात्सापेक्षस्तद्द्वयोरिति ॥ ४४ ॥
अयस्कान्तोपलाकृष्टसूचीवत्तद्द्वयोः पृथक् ॥ अस्ति शक्ति-
र्विभावाख्या मिथो बन्धाधिकारिणी ॥ ४५ ॥ अर्थत-
स्त्रिविधो बन्धो भावद्रव्योभयात्मकः ॥ प्रत्येकं तद्द्वय
यावत्तृतीयो द्वन्द्वजः क्रमात् ॥ ४६ ॥ रागात्मा भावबन्धः
स जीवबन्ध इति स्मृतः ॥ द्रव्य पौद्गलिकः पिण्डो
बन्धस्तच्छक्तिरेव वा ॥ ४७ ॥ इतरेतरबन्धश्च देशाना
तद्द्वयोर्मिथः ॥ बध्यबन्धकभावः स्याद्भावबन्धनिमित्ततः
॥ ४८ ॥ नाप्यसिद्ध स्वतस्सिद्धेरस्तित्व जीवकर्मणो ॥
स्वानुभवगर्भयुक्तेर्वा चित्समक्षोपलब्धितः ॥ ४९ ॥ अह

परात्मनि ॥ ६९ ॥ तत सिद्धं सुदृष्टान्तो मूर्तं ज्ञानद्वयं यथा ॥ अस्त्यमूर्तोऽपि जीवात्मा बद्धः स्यात् मूर्तकर्मभिः ॥ ७० ॥ ननु बद्धत्वं किं नाम किमशुद्धत्वमर्थतः ॥ वावदूकोऽथ सन्दिग्धो बोध्यः कश्चिदिति क्रमात् ॥ ७१ ॥ अर्थाद्वैभाविकी शक्तिर्या सा चेदुपयोगिनी ॥ तद्गुणाकारसंक्रान्तिर्बन्धः स्यादन्यहेतुकः ॥ ७२ ॥ तत्र बन्धेन हेतुः स्याच्छक्तिर्वैभाविकी परम् ॥ नोपयोगोऽपि तत्किन्तु परायत्तं प्रयोजकम् ॥ ७३ ॥ अस्ति वैभाविकी शक्तिस्तत्तद्द्रव्योपजीविनी ॥ सा चेद्बन्धस्य हेतुः स्यादर्थान्मुक्तेरसम्भवः ॥ ७४ ॥ उपयोगः स्यादभिव्यक्तिः शक्तेः स्वार्थाधिकारिणी ॥ सैव बन्धस्य हेतुश्चेत्सर्वो बन्धः समस्यताम् ॥ ७५ ॥ तस्मात्बद्धहेतुसामग्रीसान्निध्ये तद्गुणाकृतिः ॥ स्वाकारस्य परायत्ता तया बद्धोऽपराधवान् ॥ ७६ ॥ नासिद्धं तत्परायत्तं सिद्धसन्दृष्टितो यथा ॥ शीतमुष्णमिवात्मानं कुर्वन्नात्माऽप्यनात्मवित् ७७ तद्यथा मूर्तद्रव्यस्य शीतश्चोष्णो गुणोऽखिलः ॥ आत्मनश्चाप्यमूर्तस्य शीतोष्णानुभवः क्वचित् ॥ ७८ ॥ ननु वैभाविकी शक्तिस्तथा स्यादन्ययोगतः ॥ परयोगाद्विना किं

न स्याद्वाऽस्ति तथाऽन्यथा ॥ ७९ ॥ सत्यंनित्या तथा शक्तिः शक्तित्वाच्छुध्दशक्तिवत् ॥ अथान्यथा सतो नाशः शक्तीनां नाशतः क्रमात् ॥ ८० ॥ किन्तु तस्यास्तथाभाव शुद्धादन्योऽन्यहेतुकः ॥ तन्निमित्ताद्विना शुध्दो भावः स्यात्केवल स्वतः ॥ ८१ ॥ नासिध्दोऽसौ हि सिध्दान्तः सिध्दः सन्दृष्टितो यथा ॥ वह्नियोगाज्जल चोष्ण शीत तत्तदयोगतः ॥ ८२ ॥ ननु चैव चैंका शक्तिस्तद्भावो द्विविधो भवेत् ॥ एकः स्वाभाविको भावो भावो वैभाविकोऽपरः ॥ ८३ ॥ चेदवश्यं हि द्वे शक्ती सत स्त का क्षतिः सताम् ॥ स्वाभाविकी स्वभावैः स्वैः स्वैर्विभावैर्विभावजा ॥ ८४ ॥ सद्भावेऽप्यसद्भावे कर्मणा पुद्गलात्मनाम् ॥ अस्तु स्वाभाविकी शक्तिः शुद्धैर्भावैर्विराजिता ॥ ८५ ॥ अस्तु वैभानिकी शक्ति सयोगात्पारिणामिकी ॥ कर्मणामुदयाभावे न स्यात्सा पारिणामिकी ॥ ८६ ॥ दण्डयोगाद्यथा चक्र बम्भ्रमत्यात्मनाऽऽत्मनि ॥ दण्डयोगाद्विना चक्र चित्र वा व्यवतिष्ठते ॥ ८७ ॥ नैव यतोऽस्ति परिणामि शक्ति-

हेतुः स्याद्द्रव्यकर्म तत् ॥ तद्धेतुस्तद्विकारश्च यथा मत्युप कारकः ॥९॥ चिद्विकाराकृतिस्तस्य भावो वैभाविकः स्मृत. ॥ तन्निमित्तात्पृथग्भूतोऽप्यर्थ स्यात्तन्निमित्तिक ॥ १०॥ तद्धि नोभयवन्मार्द्वं बहिर्वं दाश्विरादपि ॥ नहेतवो भत्येकक्षेत्रस्था अप्यनघ्दयत ॥ ११ ॥ तद्बध्दत्वाविनाभूत स्यादशुध्दत्वमक्रमात्॥ तल्लक्षण यथा द्वैत स्याद्द्वैतात्स्वतोऽन्यत ॥ १२॥ तत्राद्वैतेऽपि यन्द्वैत तत् द्विधाऽप्यौपचारिकम् ॥ तत्राद्य स्वांशसङ्कल्पश्चेत्सोपाधि द्वितीयकम् ॥ १३ ॥ ननु चैक सत्सामान्याद्द्वैत स्यात्सद्विशेषत ॥ तद्विशेषेऽपि सोपाधि निरुपाधि कुताऽर्थत ॥ १४॥ अपि चाभिज्ञानमत्रास्ति ज्ञान यद्रसरूपयो ॥ न रूप न रसो ज्ञान ज्ञानमात्रमथार्थत. ॥ १५ ॥ मत्र यतो विशेषोऽस्ति सद्विशेषेऽपि वस्तुत' ॥ अन्वयव्यतिरेकाभ्यां द्वाभ्या वै सिध्दसाधनात् ॥ १६॥ तत्रान्वयो यथा ज्ञानमज्ञान परहेतुत ॥ अर्थाच्छीतमशीत स्याद्वियोगाद्धि नारिवत् ॥ १७ ॥ नाऽसिद्धोऽसौ हि दृष्टान्तो ज्ञानस्याज्ञानत सत' ॥ अस्त्यवस्थान्तर तस्य यथाजातमभात्वत. ॥ १८ व्यतिरेकोऽस्त्यात्मज्ञान यथास्व परहेतुत. ॥ मिथ्यावस्थाविशिष्ट स्याच्चैव शुद्धमेव तत्

॥ १० ॥ तद्यथा क्षायिक ज्ञान सार्थमर्वार्थगोचरम् ॥ शुध्द स्वजातिमात्रत्वादवध्द निरुपाधितः ॥ १२० ॥ क्षायोपशमिक ज्ञानमक्षयात्कर्मणा सताम् ॥ आत्मजातेश्च्युतेरेतद्बध्द चाशुध्दमक्रमात् ॥ २१ ॥ न स्याच्छुध्द न चाशुध्द ज्ञान चेदिति सर्वतः ॥ न बन्धो न फल तस्य बन्धहेतोरसम्भवात् ॥ २२ ॥ अथ चेदबन्धस्तदा बन्धो बन्धो नाबन्ध एव यः ॥ न शेषाश्चिद्विशेषाणा निर्विशेषादबन्धभाक् ॥ २३ ॥ मा भूद्वा सर्वतो बन्धः स्यादबन्धप्रसिध्दितः ॥ नाबन्धः सर्वतः श्रेयान् बन्धकार्योपलब्धित ॥ २४ ॥ अस्ति चित्सार्थसर्वार्थसाक्षात्कारि विकारभुक् ॥ अक्षायि क्षायिक साक्षादबध्द बन्धव्यत्ययात् ॥ २५ ॥ बध्द सर्वोऽपि ससारकार्यत्वे वैपरीत्यतः सिध्द सोपाधि तध्देतोरन्यथाऽनुपपत्तितः ॥ २६ ॥ सिद्धमेतावता ज्ञान सोपाधि निरुपाधि च ॥ तत्राशुद्ध हि सोपाधि शुद्ध तन्निरुपाधि यत् ॥ २७ ॥ ननु कश्चो विशेषोऽस्ति बद्धाबद्धत्वयोर्द्वयोः ॥ अस्त्यनर्थान्तर यस्मादर्थैक्योपलब्धितः ॥ २८ ॥ नैव यतो विशेषोऽस्ति हेतुमद्धेतुभावत. ॥ कार्यकारणभेदाद्वा द्वयोस्तल्लक्षण यथा

॥ ८० ॥ बन्धः परगुणाकारा क्रिया स्यात्पारिणामिकी॥ तस्यां सत्यामशुद्धत्वं तद्द्वयोः स्वगुणच्युतिः ॥ १३० ॥ बन्धहेतुरशुद्धत्वं हेतुमच्चेति निर्णयः ॥ यस्मान्न तं विना न स्यादशुद्धत्वं कदाचन ॥ ३१ ॥ कार्यरूपः स बन्धोऽस्ति कर्मणां पाकसम्भवात् ॥ हेतुरूपमशुद्धत्वं तन्नवाकर्षणत्वतः ॥ ३२ ॥ जीवः शुद्धनयादेशादस्ति शुद्धोऽपि तत्त्वतः ॥ नासिध्दश्चाप्यशुद्धोऽपि बद्धाबध्दनयादिह ॥ एकः शुद्धनयः सर्वो निर्द्वन्द्वो निर्विकल्पकः ॥ व्यवहारनयोऽनेकः सद्द्वन्द्वः सविकल्पकः ॥ ३४ ॥ वाच्यः शुद्धनयस्यास्य शुद्धो जीवश्चिदात्मकः ॥ शुद्धादन्यत्र जीवाद्या पदार्थास्ते नव स्मृताः ॥ ३५ ॥ ननु शुद्धनयः साक्षादस्ति सम्यक्त्वगोचरः ॥ एको वाच्यः किमन्येन व्यवहारनयेन चेत् ॥३६॥ सत्यं शुध्दनयः श्रेयान् न श्रेयानितरो नयः ॥ अपि न्यायबलादस्ति नयः श्रेयानिवेतरः ॥ ३७ ॥ तद्यथाऽनादिसन्तानबन्धपर्यायमात्रतः ॥ एको विवक्षितो जीवः स्मृता नव पदा अमी ॥ ३८ ॥ किञ्च पर्यायधर्माणो नवामी पदसञ्ज्ञकाः ॥ उपरक्तिरुपाधिः स्यान्नात्र पर्यायमात्रता ॥ ३९ ॥ नावासिध्दमुपाधित्वं सोपरक्तेस्तथा

स्यसः ॥ यतो नवपदव्याप्तमव्याप्त पर्ययेषु तत् ॥ १४० ॥
सोपरक्तेरपाधित्वान्नादरश्चेद्विधीयते ॥ क्व पदानि नवामूनि
जीव' शुध्दोऽनुभूयते ॥ ४१ ॥ ननूपरक्तिरस्तीति किं वा
नास्तीति तत्वतः ॥ उभय नोभय किं वा तत्क्रमेणाक्रमेण
किम् ॥ ४२ ॥ अस्तीति चेत्तदा तस्या सत्या कथमनाद-
र ॥ नास्तीति चेदसत्त्वेऽस्याः सिध्दो नानादरो नयात्
॥ ४३ ॥ सत्यामुपरक्तौ तस्यां नादयानि पदानि वै ॥
शुध्दादन्यत्र सर्वस्य नयस्यानधिकारतः ॥ ४४ ॥
असत्यामुपरक्तौ वा नैवामूनि पदानि च ॥ हेतुशून्याविे-
नाभूतकार्यशून्यस्य दर्शनात् ॥ ४५ ॥ उभय चेत्क्रमेणेह
सिद्ध न्यायाद्विरक्षितम् ॥ शुद्धमात्रमुपादेय हेय शुद्धतरं यदा
॥ ४६ ॥ यौगपद्येऽपि तद्द्वैत न समीहितसिध्दये ॥ केवलं
शुन्द्मादेय नादेय तत्पर यत. ॥ ४६ ॥ नैकस्यैकपदे स्तो द्वे
क्रिये वा कर्मणी तत. ॥ यौगपद्यमसिध्द स्याद्द्वैताद्वैतस्य का
कथा ॥ ४८ ॥ ततोऽनन्यगतेन्यायाच्छुद्धः सम्यक्त्वगो-
चरः ॥ तद्वाचकश्च य. कोऽपि वाच्य शुद्धनयोऽपि सः
॥ ४९ ॥ नैव त्वनन्यथासिद्धेः शुद्धाशुद्धत्वयोर्द्वयो' ॥ विरो-
धेऽप्यविरोध स्यान्मिथः सापेक्षत सतः ॥ १५० ॥ नासि

द्वाऽनन्यथासिद्धिस्तद्द्वयोरस्त्वस्तुन ॥ यद्विशेऽपि ना-मान्यमेवमात्र प्रतीयते ॥ ५१ ॥ तथा नव तत्त्वानि के-वलं जीवपुद्गलौ ॥ स्वद्रव्याद्यैरनन्यत्वाद्वस्तुत कर्तृकर्मणो ताभ्यामन्यत्र नैतेषां किञ्चिद्द्रव्यान्तर पृथक् ॥ न मत्येव विशुद्धस्य जीवस्य पुद्गलस्य च ॥ ५३ किन्तु सम्बद्धयो-रेव तद्द्वयोरितरेतरम् ॥ नैमित्तिकनिमित्ताभ्यां भावा नव पदा अमी ॥ ५४॥ अर्थान्नवपदीभूय जीवश्चैको विराजते ॥ तदात्वेऽपि परं शुद्धस्तद्विशिष्टदशामृते ॥ ५५ ॥ नासम्भवं भवेदेतत्तद्विधेरुपलब्धित ॥ सोपरक्तेरभूतार्थात्सिद्ध न्या-याददर्शनम् ॥ ५६ ॥ सन्त्यनेकेऽत्र दृष्टान्ता हेमपद्मज-लानला ॥ आदर्शस्फटिकाश्मानौ बोधवारिधिसैन्धवा॰ ॥ ५७ ॥ एकं हेम यथाऽनेकवर्णं स्यात्परयोगत ॥ तमस-समिवोपेक्ष्य पश्य तद्धेम केवलम् ॥ ५८ ॥ न चाशस्य सतस्तस्य स्यादुपेक्षा कथं जवात् ॥ सिद्धं कुत प्रमाणाद्वा तत्सत्त्व न कुताऽपि वा ॥ २९ ॥ नानादेय हि तद्धेम सोपरक्तेरुपाधिवत् ॥ तत्त्यागे सर्वशून्यादिदोषाणां सन्नि-पातत ॥ १६० ॥ न परीक्षाक्षमं चैतच्छुद्धं शुद्धं यदा तदा ॥ शुद्धस्यानुपलब्धौ स्याल्लब्धिहेतोरदर्शनम् ॥ ६१

'यदा तद्वर्णमालाया दृश्यते हेम केवलम् ॥ न दृश्यते परोपाधिः स्वेष्ट दृष्टेन हेम तत् ॥ ६२ ॥ तत. सि द्ध यथा हेम परयोगाद्विना पृथक् ॥ सिध्द तद्वर्णमालायामन्ययोगेऽपि वस्तुतः ॥ ६३ ॥ प्रक्रियेय हि सँयोज्या सर्वदृष्टा-न्तभूमिषु ॥ साध्यार्थस्याविरोधेन मा भनालकारिष्णुषु ६४ तोयमग्न यथा पद्मपत्रमत्र तथा न तत् ॥ तदस्पृश्यस्वभा-वत्वादर्थतो नास्ति पत्रत ॥ ६६ ॥ सकर्दम यथा वारि वारि पश्य न कर्दमम् ॥ दृश्यते तदवस्थाया शुध्द वारि ।।पङ्कवत् ॥ ६७ ॥ अग्निर्यथा तृणाग्नि' स्यादुपचारात्तृण दहन् ॥ नाग्निस्तृण तृण नाग्निरग्निरग्निस्तृण तृणम् ॥ ६८ ॥ प्रतिविम्ब यथाऽऽदर्शे सन्निकर्षात्कलापिन ॥ तदात्वे तथाऽवस्थायामपि तत्र कुत. शिखी ॥ ६९ ॥ जपापुष्पोपयोगेन विकारः स्फटिकाश्मनि ॥ अर्थात्सोऽपि विकारश्च वास्तवस्तत्र वस्तुतः ॥ १७० ॥ ज्ञान स्वय घटज्ञान परिच्छिन्दद्यथा घटम् ॥ नार्थाज्ज्ञान घटोऽय स्याज्ज्ञान ज्ञान घटो घटः ॥ ७१ ॥ वारिधि सोत्तरङ्गोऽपि वायुना प्रेरितो यथा ॥ नार्थादैक्य तदात्वेऽपि पारावारसमीरयो ॥ ७२ ॥ सर्वतः सैन्धव खिल्यमर्थादेक-

रस स्वयम् ॥ चित्रोपदशेपूर्वैर्यगानेकरसं यतः ॥ ७२
इति दृष्टान्तमनायेन स्वेष्टं दृष्ट्न सिद्धिमत् ॥ यत्पदानिनवा-
मूनि वाच्यान्यर्थादपश्यत. ॥७३॥ कैश्चित्तु कल्प्यते मोहाद्व
क्तव्यानि पदानि च ॥ हेयानीति यतस्तेभ्य शुध्दमन्यत्र
सर्वत ॥ ७४ ॥ तदसत्सर्वतस्त्याग स्यादसिध्द प्रमा
णत ॥ तदा तेभ्योऽतिरिक्तस्य शुध्दस्यानुपलब्धित ७५
नावश्य वाच्यता सिध्येत्सर्वता हेयवस्तुनि ॥ नान्वकारे
प्रविष्टस्य प्रकाशानुभवो मनाक् ॥ ७६ ॥ नावाच्यता
पदार्थाना स्यादकिञ्चिकरत्वत ॥ सार्थानीति यतोऽवश्य
वक्तव्यानि न वार्थत ॥ ७७ ॥ न स्यात्तेभ्योऽतिरिक्तस्य
सिध्द. शुध्दस्य सर्वत ॥ साधनाभावतस्तस्य तथथाऽनु-
पलब्धित ॥ ७८ ॥ ननु चार्था तर तेभ्य शुध्द सम्य
धत्वगोचरम् ॥ अस्ति जीवस्य स्व रूप निलोद्योत निरा-
मयम् ॥७९॥ न पश्यति जगद्यावन्मिथ्यान्धतमसा ततम् ।
अस्तमिथ्यापकार चेत्पश्यतीद जगज्जवात ॥ १८० ॥
नैव विरुदधर्मत्वाच्छुध्दाशुध्दत्वयोर्द्वयो ॥ नैकस्यैकपदे द्वे
स्त शुध्दाशुध्दे क्रियऽयत ॥ १८१ ॥ अथ सत्या हि
शुद्धार्था क्रियायामथतथितः ॥ स्यादशुध्दा कथ वा चेद-

स्ति नित्या कथ न सा ॥ ८२ ॥ अथासत्यामशुद्धाया बन्धाभावो विरुद्धभाक् ॥ नित्यायामथ तस्या हि सत्या मुक्तेरसम्भवः ॥ ८३ ॥ तत' सिद्ध यदा येन भावेनात्मा समन्वित' ॥ तदाऽनन्यगतिस्तेन भावेनात्माऽस्ति तन्मयः ॥ ८४ ॥ तस्माच्छुभः शुभेनैव स्यादशुभोऽशुभेन य' ॥ शुद्ध. शुद्धेन भावेन तदात्वे तन्मयत्वतः ॥ ८५ ॥ ततोऽ नर्थान्तर तेभ्य. किञ्चिच्छुद्धमनीदृशम् ॥ शुद्ध नवपदान्येव तद्विकारादृते परम् ॥ ८६ ॥ अतस्तत्त्वार्थश्रद्धान सूत्रे सद्दर्शन मतम् ॥ तत्तत्त्व नव जीवाद्या यथोद्देश्या' क्रमादपि ॥ ८७ ॥ तदुद्देशो यथा जीव' स्यादजीवस्तथा श्रव' ॥ बन्धः स्यात्संवरश्चापि निर्जरा मोक्ष इत्यपि ॥ ८८ ॥ सप्तैते पुण्यपापाभ्या पदार्थास्ते नव स्मृताः ॥ सन्ति सद्दर्शनस्योच्चैर्विषया भूतार्थमाश्रिता. ॥ ८९ ॥ तत्राधिजीवमाख्यान विदधाति यथाऽधुना ॥ कविः पूर्वापरायत्तपर्यालोचविचक्षण ॥ १०० ॥ जीवसिद्धि' सती साध्या सिद्धा साधीयसी पुरा ॥ तत्सिद्धलक्षण वक्ष्ये साक्षात्तल्लब्धिसिद्धय ॥ ९१ ॥ स्वरूप चेतना जन्तोः सा सामान्यात्सदेकधा ॥ सद्विशेषादपि द्वेधा क्रमात्सा

इय ससारिजीवानां सर्वपामविशेषतः ॥ अस्ति साधारणी वृत्तिर्न स्यात्सम्यक्त्वकारणम् ॥ १४ ॥ न स्यादात्मोपलब्धिर्वा सम्यग्दर्शनलक्षणम् ॥ शुद्धा चेदस्ति सम्यक्त्व न चेच्छुद्धा न सा सुदृक् ॥ १५ ॥ ननु चेयमशुद्धैव स्यादशुद्धा कथचन ॥ अथ बन्धफला नित्य किमबन्धफला क्वचित् ॥ १६ ॥ सत्य शुद्धाऽस्ति सम्यक्त्वे सैवाशुद्धाऽस्ति तद्विना ॥ अस्त्यबन्धफला तत्र सैव बन्धफलाऽन्यथा ॥ १७ ॥ ननु सद्दर्शन शुद्ध स्यादशुद्धा मृषा रुचि ॥ तत्कथ विषयश्चैक शुद्धाशुद्धविशेषभाक् ॥ १८ ॥ यद्वा नवसु तत्त्वेषु चास्ति सम्यग्दृगात्मन. ॥ आत्मोपलब्धिमात्र वै सा चेच्छुद्धा कुतो नव ॥ ॥१९ ॥ नैव यत स्वत शश्वत्स्वादुभेदाऽस्ति वस्तुनि ॥ तत्राभिव्यञ्जकद्वैधभावसद्भावत' पृथक् ॥ २२० ॥ शुद्ध सामान्यमात्रत्वादशुद्ध तद्विशेषत ॥ वस्तु सामान्यरूपेण स्वदते स्वादु सद्विदाम् ॥ २१ ॥ स्वदते न परेषा तद्यद्विशेषेऽप्यनीदृशम् ॥ तेषामलब्धबुद्धित्वाद्दृष्टेर्दृङ्मोहदोषत ॥ २२ ॥ यद्वाविशेषरूपेण स्वदते तत्कुदृष्टिनाम् ॥ अर्थात्सा चेतना नून कर्मकार्येऽथ कर्मणि ॥ २३ ॥

दृष्टान्तः सैन्धव खिल्य व्यञ्जनेषु निमिश्रितम् ॥ व्यञ्जन क्षारमज्ञाना स्वदते तद्विमोहिनाम् ॥ २४ ॥ क्षार खिल्य तदेवैक मिश्रित व्यञ्जनेषु वा ॥ न मिश्रित तदेवैक स्वदते ज्ञानवेदिनाम् २५ इति सिध्द कुदृष्टीनामेकैवाज्ञानचेतना सर्वैर्भावैस्तदज्ञानजातैस्तैरनतिक्रमात् ॥ २६ ॥ सिद्धमेतावता यावच्छुद्धोपलब्धिरात्मनः ॥ सम्यक्त्व तावदेवास्ति तावती ज्ञानचेतना ॥ २७ ॥ एकः सम्यग्दृगात्माऽसौ केवल ज्ञानवानिह ॥ ततो मिथ्यादृश' सर्वे नित्यमज्ञानिनो मताः ॥ २८ क्रिया साधारणी वृत्तिर्ज्ञानिनोऽज्ञानिनस्तथा ॥ अज्ञानिन. क्रिया बन्धहेतुर्न ज्ञानिनः क्वचित् ॥ २९ ॥ आस्ता न बन्धहेतु स्याज्ज्ञानिना कर्मजा क्रिया चित्र यत्पूर्वबन्दाना निर्जरायै च कर्मणाम् २३० यस्मात् ज्ञानमया भावा ज्ञानिना ज्ञाननिर्वृता ॥ अज्ञानमयभावाना नावकाश सुदृष्टिषु ॥ ३१ ॥ वैराग्य परमोपेक्षा ज्ञान स्वानुभवः स्वयम् ॥ तद्द्वय ज्ञानिनो लक्ष्म जीवन्मुक्तः स एव च ॥ ३२ ॥ ज्ञानी ज्ञानैकपात्रत्वात् पश्यत्यात्मानमात्मवित् ॥ बद्धस्पृष्टादिभावानामस्वरूपादनास्पदम् ॥ ३३ ॥ तत स्वादु यथाऽध्यक्ष स्वमासा-

दयति स्फुटम् ॥ अविशिष्टमसंयुक्तं नियतं स्वमनन्यकम् ॥ ३४ ॥ अथाव्यद्धमथास्पृष्टं शुद्धं सिद्धपदोपमम् ॥ शुद्धस्फटिकसंकाशं निःसङ्गं व्योमवत्सदा ॥ ३५ ॥ इन्द्रियोपेक्षितानन्तज्ञानदृग्वीर्यमूर्तिकम् ॥ अक्षातीतसुखानन्तस्वाभाविकगुणान्वितम् ॥ ३६ ॥ पश्यन्निति निजात्मानं ज्ञानी ज्ञानैकमूर्तिमान् ॥ प्रसङ्गादपरं चेच्छेदर्थात्मार्थं कृतार्थवत् ॥ ३७ ॥ ऐहिकं यत्सुखं नाम सर्वं वैषयिकं स्मृतम् ॥ न तत्सुखं सुखाभासं किन्तु दुःखमसंशयम् ॥ ३८ ॥ तस्माद्धेयं सुखाभासं दुःखं दुःखफलं यतः ॥ हेयं तत्कर्म यद्धेतुस्तस्यानिष्टस्य सर्वतः ॥ ३९ ॥ तत्सर्वं सर्वतः कर्म पौद्गलिकं तदष्टधा ॥ वैपरीत्यात्फलं तस्य सर्वं दुःखं विपच्यतः ॥ २४० ॥ चतुर्गतिभवावर्ते नित्यं कर्मैकहेतुके ॥ न पदस्थो जनः कश्चित्किन्तु कर्मपदस्थितः ॥ ४१ ॥ स्वस्वरूपाच्च्युतो जीवः स्यादलब्धस्वरूपवान् ॥ नानादुःखसमाकीर्णे संसारे पर्यटन्निति ॥ ४२ ॥ ननु किंचिच्छुभं कर्म किंचित्कर्माशुभं ततः ॥ क्वचित्सुखं क्वचिद्दुःखं तत्किं दुःखं परं नृणाम् ॥ ४३ ॥ नैवं यतः सुखं नैतत्तत्सुखं यत्र ना

सुखम् ॥ स धर्मो यत्र नाधर्मस्तत्सुखं यत्र नासुखम् ॥ ४४ ॥ इदमस्ति पराधीनं सुखं बाधापुरस्सरम् ॥ व्युच्छिन्नं बन्धहेतुश्च विषमं दुःखमर्थतः ॥ ४५ ॥ उक्तं च— सपरं बाधासहियं विच्छिण्णं बन्धकारणं विसमम् ॥ जं इन्दियेहि लद्धं तं सुक्खं दुक्खमेव तहा ॥ ४६ ॥ भावार्थश्चात्र सर्वेषां कर्मणामुदयः क्षणात् ॥ वज्राघात इवात्मानं दुर्वारो निष्पिनष्टि वै ॥ ४७ ॥ व्याकुलः सर्वदेशेषु जीवः कर्मोदयाद् ध्रुवम् ॥ वह्नियोगाद्यथा वारि तप्तं स्पर्शोपलब्धितः ॥ ४८ ॥ साताऽसातोदयाद् दुःखमास्तां स्थूलोपलक्षणात् ॥ सर्वकर्मोदयाघात इवाघातश्चिदात्मनः ॥ ४९ ॥ आस्तां घातः प्रदेशेषु सन्दृष्टेरुपलब्धितः ॥ वातव्याधेर्यथाऽध्यक्षं पीड्यन्ते ननु सन्धयः ॥ २५० ॥ न हि कर्मोदयः कश्चिज्जन्तोर्यः स्यात्सुखावहः ॥ सर्वस्य कर्मणस्तत्र वैलक्षण्यात्स्वरूपतः ॥ ५१ ॥ तस्य मन्दोदयात्केचिज्जीवाः समनस्काः क्वचित् ॥ तद्वेगमसहमाना रमन्ते विषयेषु च ॥ ५२ ॥ केचित्तीव्रोदयाः सन्तो मन्दाक्षाः सुखरागिणः ॥ केवलं दुःखवेगार्ता रन्तुं नार्थानपि क्षमाः ॥ ५३ ॥ यद्दुःखं लौकिकी

रुद्विर्निर्णीतस्तत्र का कथा ॥ यत्सुख लौकिकी रुढि स्तत्सुख दु खमर्थत ॥ ५४ ॥ कादाचित्क न तद्दु खं मत्युताच्छिन्नधारया ॥ सन्निकर्षेषु तेपूच्चैस्तृष्णातङ्कस्य दर्शनात् ॥ ५५ ॥ इन्द्रियार्थेषु लुब्धानामन्तर्दाह सुदा रुण ॥ तमन्तरा यतस्तेपा विपयेषु रति कुत ॥ ५६ ॥ दृश्यते रतिरेतेपा सुहितानामिवेक्षणात् ॥ तृष्णाबीज जलौकेवि रगाना दुष्टशोणितकर्पणात् ॥ ५७ ॥ शक्रचक्रधरादीनां केवल पुण्यशालिनाम् ॥ तृष्णाबीज रतिस्तेपां सुखावाप्ति कुतस्तनी ॥ ५८ ॥ उक्त च– जेसिं विसये सुरदि तेसिं दुक्ख चजाजाण साहावम् ॥ जदि त णत्थि सहाव वावारो णत्थि विसयत्थम् ॥ ५९ ॥ सर्वे तात्पर्य मत्रैतद्दु ख यत्सुखसञ्ज्ञकम् ॥ दु खस्यानात्मधर्मत्वान्नाभिलाप सुदृष्टिनाम् ॥ २६० ॥ वैपयिकसुखे न स्याद्रागभाव सुदृष्टिनाम् ॥ रागस्याज्ञानभावत्वादस्ति मिथ्यादृश स्फुटम् ॥ ६१ ॥ सम्यग्दृष्टेस्तु सम्यक्त्व स्यादवस्थान्तर चित ॥ सामान्यजनवत्तस्मान्नाभिलापोऽस्य कर्मणि ॥ ६२ ॥ उपेक्षा सर्वभोगेषु सद्दृष्टेर्दृष्टरागवत् ॥ अवश्य तदवस्थायास्तथाभावो निसर्गज ॥ ६३ ॥ अस्तु रुद्विर्यथा

ज्ञानी हेयं ज्ञात्वाऽथ मुञ्चति ॥ अत्रास्त्यावस्थिकः कश्चि
त्परिणाम सहेतुकः ॥ ६४ ॥ सिद्धमस्ताभिलापत्व कस्य-
चित्सर्वतश्चित ॥ देशतोऽप्यस्मदादीनां रागाभावस्य
दर्शनात् ॥ ६५ ॥ तद्यथा न मदीयं स्यादन्यदीयमिदं
ततः ॥ परप्रकरणे कश्चित्तृप्यन्नपि न तृप्यति ॥ ६६ ॥
यथा कश्चित्परायत्त कुर्वाणोऽनुचितां क्रियाम् ॥ कर्ता
तस्या क्रियायाश्च न स्यादस्ताभिलापवान् ॥६७॥ स्वदते
ननु सद्दृष्टिरिन्द्रियार्थकदम्बकम् ॥ तत्रेष्ट रोचते तस्मै
कथमस्ताभिलापवान् ॥ ६८ ॥ सत्यमेतादृशो यावज्जघ-
न्यं पदमाश्रितः ॥ चारित्रावरण कर्म जघन्यपदकारणम्
॥ ६९ ॥ तदर्थेषु रतो जीवश्चारित्रावरणोदयात् ॥ तद्वि-
ना सर्वतः शुद्धो वीतरागोऽस्त्यतीन्द्रियः ॥ २७० ॥
दृङ्मोहस्य क्षतेस्तस्य नूनं भोगाननिच्छतः ॥ हेतुसद्भाव-
तोऽवश्यमुपभोगक्रियाबलात् ॥ ७१ ॥ नासिद्धं तद्विरा
गत्वं क्रियामात्रस्य दर्शनात् ॥ जगतोऽनिच्छतोऽप्यस्ति
दारिद्र्यं मरणादि च ॥ ७२ ॥ व्याधीडितो जन कश्चि
त्कुर्वाणो रुक्प्रतिक्रियाम् ॥ तदात्वे रुक्पद नेच्छत्का
कथा रुक्पुनर्भवे ॥ ७३ ॥ कर्मणा पीडितो ज्ञानी कुर्वाणः

कर्पजां क्रियाम् ॥ नेच्छेत्कर्मपद किञ्चि,साभिलाष' कुतो नयात् ॥ ७४ ॥ नासिद्धोऽनिच्छतस्तस्य कर्म तस्यामया त्मन ॥ वेदनाया प्रतीकारो न स्याद्रोगादिहेतुक. ॥ ७५ ॥ सम्यग्दृष्टिरसौ भोगान् सेवमानोऽप्यसेवक ॥ नीरागस्य न रागाय कर्माकामकृत यत ॥ ७६ ॥ अस्ति तस्यापि सद्दृष्टेः कस्यचित्कर्मचेतना ॥अपि कर्मफले सा स्यादर्थतो ज्ञानचेतना ॥ ७७ ॥ चेतनाया, फल बन्धस्त त्फले वाऽथ कर्मणि ॥ रागाभावान्न बन्धोऽस्य तस्मात्ता ज्ञानचेतना ॥ ७८ ॥ आस्ति ज्ञान यथा सौख्यमैन्द्रियं चाप्यतीन्द्रियम् ॥ आद्य द्वयमनादेय समादेय पर द्वयम् ॥ ७९ ॥ नून यत्परतो ज्ञान प्रत्यर्थ परिणामि यत् ॥ व्याकुल मोहसम्पृक्तमथादु'खमनर्थवत् ॥ २८० ॥ सिद्ध तु खत्यपरयोश्चैर्व्याकुलत्वोपलब्धित ॥ ज्ञातशेपार्थसद्भावे तद्बुभुत्सादिदर्शनात् ॥८१॥ आस्तांशेपार्थजिज्ञासुरज्ञा नाद्याकुल मन ॥ उपयोगि सदर्थेपु ज्ञान वाऽप्यसुखावहम् ८२॥ प्रमत्त मोहयुक्तत्वान्निकृष्ट हेतुगौरवात् ॥ व्युच्छिन्न क्रमवर्तित्वात्कृच्छ्र चेहाद्युपक्रमात् ॥ ८३ ॥ परोक्ष त यथाद्यक्षमक्षसमुद्भवात् ॥ सदोप सशयादीना दोषाणां

तत्र सम्भवात् ॥ ८४ ॥ विरुध्दं बन्धहेतुत्वाद्वन्धकार्याच्च कर्मजम् ॥ अश्रेयोऽनात्मधर्मत्वात्कालुष्यादशुचि स्वतः ॥ ८५ ॥ मूर्छित यदपस्मारवेगवद्वर्धमानतः ॥ क्षणं वा हीयमानत्वात्क्षण यावददर्शनात् ॥ ८६ ॥ अत्राण प्रत्यनीकस्य क्षण शान्तस्य कर्मण. ॥ जीववद्व-स्यात्ततोऽवश्यमेष्यन. स्वसंस्थिति ॥ ८७ ॥ दिङ्मात्रं षट्सु द्रव्येषु मूर्तस्यैवोपलम्भकात् ॥ तत्र सूक्ष्मेषु नैव स्यादस्ति स्थूलेषु केषुचित् ॥ ८८ ॥ सत्सु ग्राह्येषु तत्रापि नाग्राह्येषु कदाचन ॥ तत्रापि विद्यमानेषु नातीतानागतेषु च ॥ ८९ ॥ तत्रापि सन्निधानत्वे सन्निकर्षेषु सत्सु च ॥ तत्राप्यवग्रहेहादौ ज्ञानस्यास्तिक्यदर्शनात् ॥ २९० ॥ समस्तेषु न व्यस्तेषु हेतुभूतेषु सत्स्वपि ॥ कदाचिज्जायते ज्ञानमुपर्युपरि शुद्धित ॥ ९१ ॥ तद्यथा मतिज्ञानस्य श्रुतज्ञानस्य वा सत. ॥ आलापा सन्त्यसंख्यातास्तत्रान न्ताश्च शक्तयः ॥ ९२ ॥ तेषामावरणान्युच्चैरालापाच्छ क्तितोऽथवा ॥ प्रत्येकं सन्ति तावन्ति सन्तानस्यानतिक्र-मात् ॥ ९३ ॥ तत्रालापस्य यस्योच्चैर्यावदंशस्य कर्मण. ॥ क्षायोपशमिक नाम स्याद्वस्थान्तर स्वतः ॥ ९४ ॥

स्पर्शादयस्तत्र किं करिष्यन्ति ते जडा ॥ ५६ ॥ अर्थात् स्पर्शादय स्वैर ज्ञानमुत्पादयन्ति चेत् ॥ घटादौ ज्ञान शून्ये च तत्किं नोत्पादयन्ति ते ॥ ५६ ॥ अथ चेतने द्रव्ये ज्ञानस्योत्पादका कचित् ॥ चेतनत्वात्स्वय तस्य किं तन्नोत्पादयन्ति वा ॥ ५७ ॥ तत सिद्ध शरीरस्य पञ्चाक्षाणां तदर्थसात् ॥ अस्याकिञ्चित्करत्वं तचितो ज्ञान सुखस्मृति ॥ ५८ ॥ ननु देहेन्द्रियार्थेषु सत्सु ज्ञान सुख नृणाम् ॥ असत्सु न सुख ज्ञान तदकिञ्चित्कर कथम् ॥ ५९ ॥ नैव यतोऽन्वया पेक्षे व्यञ्जके हेतुदर्शनात् ॥ कार्याभिव्यञ्जक कोऽपि साधन न विनाऽन्वयम् ॥ १६० ॥ दृष्टान्तोऽगुरुगन्धस्य व्यञ्जक पावको भवेत् ॥ न स्याद्विनाऽगुरुद्रव्य गन्धस्तत्पावकस्य स ॥ ६१ ॥ तथा देहेन्द्रिय चार्था, सन्त्य भिव्यञ्जका कचित् ॥ ज्ञानस्य तथा सौख्यस्य न स्वय चिरसुखात्मन ॥ ६२ ॥ नाप्युपादानमू यद्यपि स्यात् भिव्यञ्जकात्सुखज्ञान वा तत्र सर्वत्र हेतुमुपादानम् ॥ ६३ ॥ तत सिद्ध सुखो ज्ञानसति ॥ देहेन्द्रि- ... पुन. ॥ ससारे वा पमुक्तो वा सु

सदसतोरुन्मत्तवत् ॥ नोपलब्धिरिहार्थात्सा तच्छेषानुपलब्धिवत् ॥ २४ ॥ ततोऽस्ति यौगिकी रूढि श्रद्धासम्यक्त्वलक्षणम् ॥ अर्थादप्यविरुद्ध स्यान्मूक्त स्वात्मानुभूतिवत् ॥ २५ ॥ गुणाश्चान्ये प्रसिद्धा ये सद्दृष्टेः प्रशमादयः बहिर्दृष्ट्या यथास्व ते सन्ति सम्यक्त्वलक्षणाः ॥ २६ ॥ तत्राद्यः प्रशमो नाम संवेगश्च गुणः क्रमात् ॥ अनुकम्पा तथाऽऽस्तिक्य वक्ष्ये तल्लक्षण यथा ॥ २७ ॥ प्रशमो विषयेपूच्चैर्भाव. क्रोधादिकेषु च ॥ लोकासख्यातमात्रेषु स्वरूपाच्छिथिल मनः ॥ २८ ॥ सद्यःकृतापराधेषु यद्वा जीवेषु जातुचित् ॥ तद्वधादिविकाराय न बुद्धिः प्रशमो मतः ॥ २९ ॥ हेतुस्तत्रोदयाभाव. स्यादनन्तानुबन्धिनाम् ॥ अपि शेषकषायाणा नून मन्दोदयोऽशतः ॥ ४१० ॥ आरम्भादिक्रिया तस्य दैवाद्वा स्यादकामतः ॥ अन्तःशुद्धेः प्रसिद्धत्वान्न हेतु' प्रशमक्षतेः ॥ ३१ ॥ सम्यक्त्वेनाविनाभूत. प्रशमः परमो गुणः ॥ अन्यत्र प्रशममन्योऽप्याभास स्यात्तदत्ययात् ॥ ३२ ॥ संवेगः परमोत्साहो धर्मे धर्मफले चितः ॥ सधर्मेष्वनुरागो वा प्रीतिर्वा परमेष्ठिषु ॥ ३३ ॥ धर्मः सम्यक्त्वमात्रात्मा

शुद्धस्यानुभवोऽथवा ॥ तत्फलं सुखमत्यक्षमक्षय क्षायिकं च यत् ॥ ३४ ॥ इतरत्र पुना रागस्तद्गुणेष्वनुरागत. नातद्गुणेऽनुरागोऽपि तत्फलस्याप्यलिप्सया ॥ ३५ ॥ अत्रानुरागशब्देन नाभिलापो निरुच्यते ॥ किन्तु शेप मधर्माद्वा निवृत्तिस्तत्फलादपि ॥ ३६ ॥ अथानुरागश ब्दस्य विधिर्वाच्यो यदाऽर्थतः ॥ प्राप्ति स्यादुपलब्धिर्वा शब्दाश्चैकार्थवाचका ॥ ३७ ॥ न चाशक्य निषिद्ध' स्यादभिलापो भोगेष्वलम् ॥ शुद्धोपलब्धिमात्रेऽपि हि यो भोगाभिलापवत् ॥ ३८ ॥ अर्थात्सर्वोऽभिलाप. स्यादज्ञान दृग्विपर्ययात् ॥ न्यायादलब्धतत्त्वार्थो लब्धु कामो न लब्धिमान ॥ ३९ ॥ मिथ्या सर्वोऽभिलापः स्यान्मिथ्याकर्मोदयात्परम् ॥ स्वार्थसार्थक्रियासिध्दै नाल मत्यक्षतो यत ॥ ४४० ॥ क्वचित्तस्यापि सद्भावे नेष्टसिद्धिरहेतुत ॥ अभिलापस्याप्यभावे स्वेष्टसिद्धिश्च हेतुत ॥ ४१ ॥ यश श्रीसुतमित्रादि सर्व कामयते जगत् ॥ नास्य लाभोऽभिलापेऽपि विना पुण्यो- दयात्सत ॥ ४२ ॥ जरामृत्युदरिद्रादि न हि का- मयते जगत् ॥ तत्संयोगो वलादस्ति सततस्तत्राश्च-

भोदयात् ॥ ४३ ॥ सँवेगो विधिरूप स्यान्निषेधश्च निषेधनात् ॥ स्याद्विवक्षावशाद्द्वैतं नार्थादर्थान्तरं तयो. ॥ ४४ ॥ त्यागः सर्वाभिलाषस्य निर्वेदो लक्षणात्तथा ॥ ससँवेगोऽथवा धर्मः साभिलाषो न धर्मवान् ॥ ४५ ॥ नापि धर्मः क्रियामात्र मिथ्यादृष्टेरिहार्थतः ॥ नित्यं रागादिसद्भावात् प्रत्युताधर्म एव सः ॥ ४६ ॥ नित्य रागी कुदृष्टिः स्यान्न स्यात्कचिदरागवान् ॥ अस्तरागोऽस्ति सद्दृष्टिर्नित्य वा स्यान्न रागवान् ॥ ४७ ॥ अनुकम्पा क्रिया ज्ञेया सर्वसत्त्वेष्वनुग्रहः ॥ मैत्रीभावोऽथ मध्यस्थं निःशल्य वैरवर्जनात् ॥ ४८ ॥ दृङ्मोहानुदयस्तत्र हेतुर्वाच्योऽस्ति केवलम् ॥ मिथ्याज्ञान विना न स्याद्वैरभावः क्वचिद्यत ॥ ४९ ॥ मिथ्या यत्परत स्वस्य स्वस्माद्वा परजन्मिनाम् ॥ इच्छेत्तत्सुखदुःखादि मृत्युर्वा जीवितं मनाक् ॥ ५० ॥ अस्ति यस्यैतदज्ञान मिथ्यादृष्टिः स शल्यवान् ॥ अज्ञानाद्धन्तुकामोऽपि क्षमो हन्तु न चापरम् ॥ ५१ ॥ समस्ता सर्वभूतेषु याऽनुकम्पा परत्र सा ॥ अर्थतः स्वानुकम्पा स्याच्छल्यवच्छल्यवर्जनात् ॥ ५२ ॥ रागाद्यशुद्धभावाना सद्भावे बन्ध एव हि ॥ न बन्धस्त,

तथा दृष्टेरमूढता ॥ ८२ ॥ उपबृंहणनामा च सुस्थितीक्र रण तथा ॥ वात्सल्य च यथाम्नायाद्गुणोऽप्यस्ति प्रभावना ॥ ८३ ॥ शका भी साध्वस भीतिर्भयमेका-भिधा अमी ॥ तस्य निष्क्रान्तितो जातो भावो निःशं-कितोऽर्थत ॥ ८४ ॥ अर्थवशादत्र सूत्रे शंका न स्या न्मनीषिणाम् ॥ सूक्ष्मान्तरितदूरार्था स्युस्तदास्तिक्य-गोचराः ॥ ८५ ॥ तत्र धर्मादयः सूक्ष्माः सूक्ष्मा कालाणवोऽणवः ॥ अस्ति सूक्ष्मत्वमेतेषा लिङ्गस्याक्षैर-दर्शनात् ॥ ८६ ॥ अन्तरिता यथा द्वीपसरिन्नाथनगा-धिपा॰ ॥ दूरार्था भाविनोऽतीता रामरावणचक्रिण ॥ ८७ ॥ न स्यान्मिथ्यादृशो ज्ञानमेतेषा काप्यसशयम् ॥ सशयस्यादिहेतोर्वै दृङ्मोहस्योदयात्सत॰ ॥ ८८ ॥ न चाशंक्य परोक्षास्ते सद्दृष्टेर्गोचराः कुतः ॥ तैः सह सन्निकर्षस्य साक्षकस्याप्यसम्भवात् ॥ ८९ ॥ अस्ति तत्रापि सम्यक्त्वमाहात्म्य दृश्यते महत् ॥ यदस्य जग-तो ज्ञानमस्त्यास्तिक्यपुरस्सरम् ॥ ९० ॥ नासम्भवमिद यस्मात्स्वभावोदर्कगोचरः ॥ अतिवागतिशयः सर्वो योगिना योगशक्तिवत् ॥ ९१ ॥ अस्ति चात्मपरिच्छेदि

महान् ॥ ११ ॥ अज्ञानी कर्मनोकर्मभावकर्मात्मक च यत् ॥ मनुते सर्वमेवैतन्मोहादद्वैतवादवत् ॥ १२ ॥ विश्वाद्भिन्नोऽपि विश्व स्व कुर्वन्नात्मानमात्महा ॥ भूत्वा विश्वमयो लोके भय नोज्झति जातुचित् ॥ १३ ॥ ता त्पर्य सर्वतोऽनित्ये कर्मण पाकसम्भवात् ॥ नित्यबुध्या शरीरादौ भ्रान्तो भीतिमुपैति स ॥ १४ ॥ सम्यग्दृष्टिः सदेकत्व स्वं समासादयन्निव ॥ यावत्कर्मातिरिक्तत्वा-च्छुध्दमत्येति चिन्मयम् ॥ १५ ॥ शरीर सुखदु:खादि पुत्रपौत्रादिक तथा ॥ अनित्य कर्म कार्यत्वादस्वरूपम वैति यः ॥ १६ ॥ लोकोऽय मे हि चिल्लोको नून नि-त्योऽस्ति सोऽर्थतः ॥ नापरोऽलौकिको लोकस्ततो भीतिः कुतोऽस्ति मे ॥ १७ ॥ स्वात्मसञ्चेतनादेव ज्ञानी ज्ञानैकतानतः ॥ इहलोकभयान्मुक्तो मुक्तस्तत्कर्मबन्ध नात् ॥ १८ ॥ परलोकः परत्रात्मा भाविजन्मान्तरांश-भाक् ॥ तत कम्प इव त्रासो भीति परलोकतोऽस्ति सा ॥ १९ ॥ भद्र चेज्जन्म स्वर्लोके मा भून्मे जन्म दुर्गतौ ॥ इत्याद्याकुलित चेत' साध्वम पारलौकिकम् ॥ ५२० ॥ मिथ्यादृष्टेस्तदेवाऽस्ति मिथ्याभावैककारणात्

॥ तद्विपक्षस्य सद्दृष्टेर्नास्ति तत्तत्र व्यत्ययात् ॥ २१ ॥ बहिर्दृष्टिरनात्मज्ञो मिथ्यामात्रैकभूमिकः ॥ स्वं समासादयत्यज्ञः कर्म कर्मफलात्मकम् ॥ २२ ॥ ततो नित्यं भयाक्रान्तो वर्तते भ्रान्तिमानिव ॥ मनुते मृगतृष्णायामम्भोभारं जनः कुधीः ॥ २३ ॥ अन्तरात्मा तु निर्भीकः पदं निर्भयमाश्रितः ॥ भीतिहेतोरिहावश्यं भ्रान्तेरत्राप्यसम्भवात् ॥ २४ ॥ मिथ्याभ्रान्तिर्यदन्यत्र दर्शनं चान्यवस्तुनः ॥ यथा रज्जौ तमोहेतोः सर्पाध्यासाद्द्रवत्यधीः ॥ २५ ॥ स्वसंवेदनप्रत्यक्षं ज्योतिर्यो वेत्त्यनन्यसात् ॥ स बिभेति कुतो न्यायादन्यथाभवनादिह ॥ २६ ॥ वेदनाऽऽगन्तुका बाधा मलानां कोपतस्तनौ ॥ भीतिः प्रागेव कम्पः स्यान्मोहाद्वा परिदेवनम् ॥ २७ ॥ उल्लाघोऽहं भविष्यामि मा भून्मे वेदना क्वचित् ॥ मूर्च्छैव वेदना भीतिश्चिन्तनं वा मुहुर्मुहुः ॥ २८ ॥ अस्ति नूनं कुदृष्टेः सा दृष्टिदोषैकहेतुतः ॥ नीरोगस्यात्मनोऽज्ञानान्न स्यात्सा ज्ञानिनः क्वचित् ॥ २९ ॥ पुद्गलाद्भिन्नचिद्धाम्नो न मे व्याधिः कुतो भयम् ॥ व्याधिः सर्वशरीरस्य नामूर्तस्येति चिन्तनात्

निष्टोऽस्त्यनिष्टार्थबुद्धिः कर्मफलात्मके ॥ ६० ॥ न चा-
सिद्धमनिष्टत्वं कर्मणस्तत्फलस्य च ॥ सर्वतो दुःखहे
तुत्वाद्युक्तिस्वानुभवागमात् ॥ ५७० ॥ अनिष्टफलव
त्त्वात्स्यादनिष्टार्था व्रतक्रिया ॥ दुष्टकार्यानुरूपस्य हेतो-
र्दुष्टोपदेशवत् ॥ ७१ ॥ अथासिद्धं स्वतन्त्रत्वं क्रियायाः
कर्मणः फलात् ॥ ऋते कर्मोदयाद्धेतोस्तस्याश्चासम्भ-
वो यतः ॥ ७२ ॥ यावदक्षीणमोहस्य क्षीणमोहस्य
चात्मनः ॥ यावत्यस्ति क्रियानाम तावत्यौदयिकी स्मृता
॥ पौरुषो न यथाकामं पुंसः कर्मोदितं प्रति ॥ न परं
पौरुषापेक्षो दैवापेक्षो हि पौरुषः ॥ ७४ ॥ सिद्धो
निःकाङ्क्षितो ज्ञानी कुर्वाणोऽप्युदितां क्रियाम् ॥ निष्का-
मतः कृतं कर्म न रागाय निरागिणाम् ॥ ७५ ॥
नाशङ्क्यं चास्ति निःकाङ्क्षः सामान्योऽपि जनः क्वचित् ॥
हेतोः कुतश्चिदन्यत्र दर्शनातिशयादपि ॥ ७६ ॥ यतो
निष्काङ्क्षता नास्ति न्यायात्सद्दर्शनं विना ॥ नानिच्छास्त्य-
क्षजे सौख्ये तदत्यक्षमनिच्छतः ॥ ७७ ॥ तदत्यक्षसुखं
मोहान्मिथ्यादृष्टिः स नेच्छति ॥ दृङ्मोहस्य तथा पाक
शक्तेः सद्भावतोऽनिशम् ॥ ७८ ॥ उक्तो निष्काङ्क्षितो

भावो गुण सद्दर्शनस्य वै॥ अस्तु का नः क्षतिः मास्वेतत्परीक्षाक्षमता मता ॥ ७९ ॥ अथ निर्विचिकित्साख्यो गुण संलक्ष्यते स य ॥ सद्दर्शनगुणस्योच्चैर्गुणो युक्तिवशादपि ॥ ५८० ॥ आत्मन्यात्मगुणोत्कर्षबु-यो स्वात्मप्रशंसनात् ॥ परत्राप्यपकर्षेषु बुद्धिर्विचिकित्सा स्मृता ॥ ८१ ॥ निष्क्रान्तो विचिकित्सायाः प्रोक्तो निर्विचिकित्सकः ॥ गुणः सद्दर्शनस्योच्चैर्वक्ष्ये तल्लक्षण यथा ॥ ८२ ॥ दुर्दैवाद्दुःखिते पुंसि तीव्रासाताघृणास्पदे॥ यन्नास्तया(?) परं चेतः स्मृतो निर्विचिकित्सकः॥ ८३ ॥ नैतत्तन्मनस्यज्ञानमस्म्यहं सम्पदा पदम्॥ नासावस्मत्समा दीनो वराको विपदा पदम्॥ ८४॥ प्रत्युत ज्ञानमेवैतत्तत्र कर्मविपाकजाः॥ प्राणिन सदृशा, सर्वे त्रसस्थावरयोनयः ॥ ८५॥ यथा द्वावर्भकौ जातौ शूद्रिकायास्तथोदरात्॥ शूद्रावभ्रान्तितस्तौ द्वौ कृत भेदभ्रमात्मना ॥८६॥ जले-जम्बालवज्जीवे यावत्कर्माशुचि स्फुटम्॥ अहता चाविशेषाद्वा नून कर्ममलीमसः ॥८७॥ अस्ति सद्दर्शनस्यासौ गुणो निर्विचिकित्सकः॥ यतोऽवश्य स तत्रास्ति तस्मादन्यत्र न क्वचित् ॥८८ ॥ कर्मपर्यायमात्रेषु रागिणः स कुतो गुणः

शुध्दात्मलब्धित' ॥ अर्हन्निति च सिध्दश्च पर्यायार्थो द्विधा मतः ॥ ९ ॥ दिव्यौदारिकदेहस्थो धौतघातिचतुष्टयः ॥ ज्ञानदृग्वीर्यसौख्याढ्य सोऽर्हन् धर्मोपदेशकः ॥ ६१० ॥ मूर्तिमद्देहनिर्मुक्तो मुक्तो लोकाग्रसस्थितः ॥ ज्ञानाद्यष्टगुणोपेतो निष्कर्मा सिद्ध सञ्ज्ञक' ॥ ११ ॥ अर्हन्निति जगत्पूज्यो जिनः कर्मारिशातनात् ॥ महादेवोऽधिदेवत्वाच्छङ्करोऽपि सुखावहात् ॥ १२ ॥ विष्णुर्ज्ञानेन सर्वार्थविस्तृतत्वात्कथश्चन ॥ ब्रह्म ब्रह्मज्ञरूपत्वाद्धरिर्दु खापनोदनात् ॥ १३ ॥ इत्याद्यनेक नामाऽपि नानेकोऽस्ति स्वलक्षणात् ॥ यतोऽनन्तगुणात्मैकद्रव्य स्यात्सिद्धसाधनात् ॥ १४ ॥ चतुर्विंशतिरित्यादि यावदन्तमनन्तता ॥ तद्बहुत्व न दोषाय देवत्वैकविधत्वत ॥ १५ ॥ प्रदीपानामनेकत्व न प्रदीपत्वहायने ॥ यतोऽत्रैकविधत्व स्याम स्यान्नानाप्रकारता ॥ १६ ॥ न चाशङ्क्य यथासख्य नामतोऽस्त्यस्त्यनन्तधा ॥ न्यायादेक गुण चैक प्रत्येक नाम चैककम् ॥ १७ ॥ न यत सर्वतो मुख्यसङ्ख्या तत्रैव सम्भवात् ॥ अभिधस्य ततो वाच्य व्यवहारस्य दर्शनात् ॥ १८ ॥ एद्वै·

प्रोक्तमत. सूत्रे तत्र वागतियाति यत्'॥ द्वादशाङ्गाङ्गबाह्य वा श्रुत स्थूलार्थगोचरम् ॥ १९ ॥ कृत्स्नकर्मक्षयाज्ज्ञान क्षायिक दर्शन पुनः ॥ अत्यक्ष सुखमात्मोत्थ वीर्यं चेति चतुष्टयम् ॥ ६२० ॥ सम्यक्त्व चैव सूक्ष्मत्वमव्यावाध गुण स्वतः ॥ अस्त्यगुरुलघुत्व च सिद्धे चाष्ट गुणाः स्मृताः ॥ २१ ॥ इत्याद्यनन्तधर्माढ्यो कर्माष्टकविवर्जितः ॥ मुक्तोऽष्टादशभिर्दोषैर्देवः सेव्यो न चेतरः ॥ २२ ॥ अर्थाद्गुरुः स एवास्ति श्रेयोमार्गोपदेशकः ॥ आप्तश्चैव स्वतः साक्षान्नेता मोक्षस्य वर्त्मनः ॥ २३ ॥ तेभ्योऽर्वागपि छद्मस्थरूपास्तद्रूपधारिणः ॥ गुरव स्युर्गुरोर्न्याया न्यायोऽवस्थाविशेषभाक् ॥ २४ ॥ अस्त्यवस्थाविशेपोऽत्र युक्तिस्वानुभवागमात् ॥ शेष' ससारिजीवेभ्यस्तेषामेवातिशायनात् ॥ २५ ॥ भाविनैगमनयायत्तो भूष्णुस्तद्वानिवेष्यते ॥ अवश्य भावतो व्याप्तेः सद्भावात्सिद्धसाधनम् ॥ २६ ॥ अस्ति सद्दर्शन तेपु मिथ्याकर्मोपशान्तित ॥ चारित्र देशतः सम्यक्चारित्रावरणक्षतेः ॥ २७ ॥ ततः सिद्ध निसर्गाद्वै शुद्धत्व हेतुदर्शनात् ॥ मोहकर्मोदयाभावात्तत्कार्यस्याप्यसम्भवात् २८ तच्छुद्धत्वं सुविख्या(ख्या)तं

दोषाँस्तु तत्रोक्तान् सप्तेऽतीचारसञ्ज्ञकान् ॥ अन्यथा मद्यमांसादीन् श्रावकः क समाचरेत् ॥ ३२ ॥ दानं चतुर्विधं देयं पात्रबुध्याऽथ श्रद्धया ॥ जघन्यमध्यमोत्कृष्टपात्रेभ्यः श्रावकोत्तमैः ॥ ३३ ॥ कुपात्रायाप्यपात्राय दानं देयं यथोचितम् ॥ पात्रबुध्या निषिध्दं स्यान्निसिध्दं न कृपाधिया ॥ ३४ ॥ शेषेभ्यः क्षुत्पिपासादिपीडितेभ्योऽशुभोदयात् ॥ दीनेभ्योऽदयादानादि दातव्यं करुणार्णवैः ॥ ३५ ॥ पूजामप्यर्हतां कुर्याद्वा प्रतिमासु तद्धिया ॥ स्वरव्यञ्जनानि सस्थाप्य सिध्दानप्यर्चयेत्सुधीः ॥ ३६ ॥ सूर्युपाध्यायसाधूनां पुरस्तत्पादयोः स्तुतिम् ॥ प्राग्विधायाष्टधा पूजां विदध्यात्स त्रिशुध्दितः ॥ ३७ ॥ सम्मानादि यथाशक्ति कर्तव्यं च सधर्मिणाम् ॥ व्रतिनां चेतरेषां वा विशेषाद्ब्रह्मचारिणाम् ॥ ३८ ॥ नारीभ्योऽपि व्रताढ्याभ्यो न निषिद्धं जिनागमे ॥ देयं सम्मानदानादि लोकानामविरुध्दतः ॥ ३९ ॥ जिनचैत्यगृहादीनां निर्माणे सावधानता ॥ यथासम्पद्विधेयाऽस्ति दूष्याभावस्य लेशतः ॥ ७४० ॥ सिध्दानामर्हतां चापि यन्त्राणि प्रतिमाः शुभाः चैत्यालयेषु सस्थाप्य प्राक्प्रतिष्ठापयेत्सुधीः ॥ ४१ ॥

अपि तीर्थादियात्रासु विदध्यात्सोऽयतं मनः ॥ श्रावक स च तत्रापि संयमं न विराधयेत् ॥ ४२ ॥ नित्ये नैमित्तिके चैवं जिनबिम्बमहोत्सवे ॥ शैथिल्य नैव कर्तव्यं तत्त्वज्ञैस्तद्विशेषतः ॥ ४३ ॥ संयमो द्विविधश्चैव विधेयो गृहमेधिभिः ॥ विनाऽपि प्रतिमारूप व्रत यद्वा स्वशक्तित ॥ ४४ ॥ तपो द्वादशधा द्वेधा बाह्याभ्यन्तरभेदत ॥ कृत्स्नमन्यतम वा तत्कार्यं चानतिवीर्यसात् ॥ ४५ ॥ उक्तं दिङ्मात्रतोऽप्यत्र प्रसङ्गाद्वा गृहिव्रतम् ॥ वक्ष्ये चोपासकाध्यायात्सावकाशात्सविस्तरम् ॥ ४६ ॥ यतेर्मूलगुणाश्चाष्टाविंशतिर्मूलवत्तरोः ॥ नात्राप्यन्यतमेनोना नातिरिक्ता कदाचन ॥ ४७ ॥ सर्वैरेभि समस्तैश्च सिद्धं यावन्मुनिव्रतम् ॥ न व्यस्तैर्व्यस्तमात्र तु यावदंशनयादपि ॥४८॥ उक्त च—वदसमिदिंदियरोधो लोचो आवस्सयमचेलमण्हाणम् ॥ खिदिसयणमदंतमणं ठिदिभोयणमेयभत्त च ॥ ४९ ॥ एते मूलगुणाः प्रोक्ता यतीनां जैनशासने ॥ लक्षाणां चतुराशीतिर्गुणाश्चोत्तरसंज्ञकाः ॥ ५० ॥ ततः सागारधर्मो वाऽनगारो वा यथोदितः ॥ प्राणिसंरक्षणं मूलमुभयत्राविशेषतः ॥ ५१ ॥ उक्तमस्ति क्रियारूपं

न ह्यात्मसामर्थ्यं यावन्दन्त्रासिकोऽग्रकम् ॥ तावद्दृष्टं च श्रोतुं च तद्बाधां सहते न स ९३ तद्विधाऽथ च वात्सल्य भेदात्स्वपरगोचरात ॥ प्रधान स्वात्मसंबन्धिगुणो यावत्परात्मनि ९४ परीषहोपसर्गाद्यै पीडितस्यापि कुत्रचित् ॥ न शैथिल्य शुभाचारे ज्ञाने ध्याने तदादिमम् इतरस्मागिह स्यात गुणो दृष्टिमत स्फुटम् ॥ शुद्धस्यानबलादेव यतो बाधापकर्षणम् ९६ प्रभावनांगसज्ञोऽस्ति गुण सद्दर्शनस्य वै ॥ उत्कर्षकरण नाम लक्षणादपि लक्षितम् ९७ अथातद्धर्मण पक्षे नावद्यस्य मनागपि ॥ धर्मपक्षक्षतिर्यस्मादधर्मोत्कर्षपोषणात् ९८ पूर्ववत्सोऽपि द्विविध स्वान्यात्मभेदत. पुन' ॥ तत्राद्यो वरमादेय स्यादादेय. परोऽप्यत ९९ उत्कर्षो यद्बलाधिक्यादधिकीकरण वृषे ॥ असत्सु प्रत्यनीकेषु नाल दोषाय तत्कचित् ८२० मोहारातिक्षते शुद्ध शुद्धाच्छुध्दतरस्ततः ॥ जीव' शुध्दतमः कश्चिदस्तीत्यात्मप्रभावना ९१ नेद स्यात्पौरुषायत्त किन्तु नून स्वभावत ॥ ऊर्ध्वमूर्ध्वं गुणश्रेणौ यतः सिद्धिर्यथोत्तरम् २२ बाह्यः प्रभा.नागोऽस्ति विद्यामन्त्रादिभिर्बलै. । तपोदानादिभि

जैनधर्मोत्कर्षो विधीयताम् ॥ २३ ॥ परेषामपकर्षाय मि थ्यात्वोत्कर्षशालिनाम् ॥ चमत्कारकरं किञ्चित्तद्विधेयं महात्मभिः ॥ २४ ॥ उक्तप्रभावनाङ्गोऽपि गुणः सद्दर्शनान्वितः ॥ येन सम्पूर्णतां याति दर्शनस्य गुणाष्टकम् ॥ २५ ॥ इत्यादयो गुणाश्चान्ये विद्यन्ते सद्दगात्मनः ॥ अलं चिन्तनया तेषामुच्यते यद्विवक्षितम् ॥ २६ ॥ प्रकृतं तद्यथाऽस्ति स्वं स्वरूपं चेतनाऽऽत्मनः ॥ सा त्रिधाऽत्राप्युपादेया सद्दृष्टेर्ज्ञानचेतना ॥ २७ ॥ श्रद्धानादिगुणाश्चैते वाह्योल्लेखच्छलादिह ॥ अर्थात्सद्दर्शनस्यैकं लक्षणं ज्ञानचेतना ॥ २८ ॥ ननु रूढिरिहाप्यस्ति योगाद्वा लोकतोऽथवा ॥ तत्सम्यक्त्वं द्विधाऽप्यर्थनिश्चयाद्व्यवहारतः ॥ २९ ॥ व्यावहारिकसम्यक्त्वं सरागं सविकल्पकम् ॥ निश्चयं वीतरागं तु सम्यक्त्वं निर्विकल्पकम् ॥ ८३० ॥ इत्यस्ति वासनोन्मेषः केषाञ्चिन्मोहशालिनाम् ॥ तन्मते वीतरागस्य सद्दृष्टेर्ज्ञानचेतना ॥ ३१ ॥ तैः सम्यक्त्वं द्विधा कृत्वा स्वामिभेदो द्विधा कृतः ॥ एकः कश्चित्सरागोऽस्ति वीतरागश्च कश्चन ॥ ३२ ॥ तत्रास्ति वीतरागस्य कस्यचिज्ज्ञानचेतना ॥ सद्दृष्टेर्निर्विकल्पस्य नेतरस्य

तद्रूपते ॥ १०१० ॥ नैतत्कर्माऽपि तत्तुल्यमन्तर्भावीति न कश्चित् ॥ तद्व्यावरणादेतदस्ति जात्यन्तरं यत ॥ १०११ ॥ ततः सिद्धं यथा ज्ञानं जीवस्यैको गुण स्वतः ॥ सम्यक्त्वं च तथा नाम जीवस्यैको गुणः स्वतः ॥ १२ ॥ पृथगुद्देशः एवास्य पृथग्लक्ष्यं च लक्षणम् ॥ पृथग्दृङ्मोहकर्म स्यादन्तर्भावः कुतो नयात् ॥ १३ ॥ एवं जीवस्य चारित्रं गुणोऽस्त्येकः प्रमाणसात् ॥ तन्मोहयति यत्कर्म तत्स्याच्चारित्रमोहनम् ॥ १४ ॥ अस्ति जीवस्य वीर्याख्यो गुणोऽप्येकस्तदादिवत् ॥ तदन्तरयतीदं यदन्तरायं हि कर्म तत् ॥ १५ ॥ एतावदत्र तात्पर्यं यथा ज्ञानं गुणश्चितः ॥ तथाऽनन्ता गुणा ज्ञेया युक्तिस्वानुभवागमात् ॥ १६ ॥ न गुणः कोऽपि कस्यापि गुणस्यान्तर्भवः क्वचित् ॥ नाधारोऽपि च नाधेयो हेतुर्नापीह हेतुमान् ॥ १७ ॥ किन्तु सर्वोऽपि स्वात्मीयः स्वा-

मनेकधा ॥ मन पर्ययज्ञानं वा तद्द्वय भावयेत्समम् ॥ २० ॥ तत्तदावरणस्योच्चैः क्षायोपशमिकत्वत. ॥ स्यात्तथालक्षिताद्भावात्स्यादत्राप्यपरा गति ॥ २१ ॥ मतिज्ञानं श्रुतज्ञानमेतन्मात्र सदात्मम् ॥ स्याद्वा तरतमैर्भावैर्यथा हेतूपलब्धिसात् ॥ २२ ॥ ज्ञान यथाऽदर्थानामस्ति ग्राहकशक्तिमत् ॥ क्षायोपशमिक तावदस्ति नौदयिक भवेत् ॥ २३ ॥ अस्ति द्वेधाऽवधिज्ञान हेतोः कुतश्चिदन्तरात् ॥ ज्ञान स्यात्सम्यगवधिरज्ञान कुत्सितोऽवधि ॥ २४ ॥ अस्ति द्वेधा मतिज्ञान श्रुतज्ञान च स्याद्द्विधा ॥ सम्यङ्मिथ्याविशेषाभ्या ज्ञानमज्ञानमित्यपि ॥ २५ ॥ त्रिषु ज्ञानेषु चैतेषु यत्स्यादज्ञानमर्थतः ॥ क्षायोपशमिक तत्स्यान्न स्यादौदयिक क्वचित् ॥ २६ ॥ अस्ति यत्पुनरज्ञानमर्थादौदयिक स्मृतम् ॥ तदस्ति शून्यतारूप यथा निश्चेतन वपुः ॥ २७ ॥ एतावताऽस्ति यो भावो दृङ्मोहस्योदयादपि ॥ पाकाच्चारित्रमोहस्य सर्वोऽप्यौदयिक स हि ॥ २८ ॥ न्यायादप्येव मन्येषां मोहादिघातिकर्मणाम् ॥ यावाँस्तत्रोदयाज्जातो भावोऽस्त्यौदयिकोऽखिल ॥ २९ ॥ तत्राप्यस्ति विवेकोऽयं श्रेयानत्रोदितो यथा ॥ वैकृतो मोहजा भावः श्रु-

तदुच्यते ॥ १०१० ॥ नैतत्कर्माऽपि तत्तुल्यमन्तर्भावीति न कश्चित् ॥ तद्द्व्यावरणादेतदस्ति जात्यन्तरं यत ॥ १०११ ॥ तत सिद्धं यथा ज्ञानं जीवस्यैको गुण स्वत ॥ सम्यक्त्वं च तथा नाम जीवस्यैको गुण स्वतः ॥ १२ ॥ पृथगुद्देश एवास्य पृथग्लक्ष्य च लक्षणम् ॥ पृथग्दृङ्मोहकर्म स्यादन्तर्भाव. कुतो नयात् ॥ १३ ॥ एव जीवस्य चारित्रं गुणोऽस्त्येक प्रमाणसात् ॥ तन्मोहयति यत्कर्म तत्स्याच्चारित्रमोहनम् ॥ १४ ॥ अस्ति जीवस्य वीर्याख्यो गुणोऽस्त्येकस्तदादिवत् ॥ तदन्तरयतीहेदमन्तराय हि कर्म तत् ॥ १५ ॥ एतावदत्र तात्पर्य यथा ज्ञान गुणश्चितः ॥ तथाऽनन्ता गुणा ज्ञेया युक्तिस्वानुभवागमात् ॥ १६ ॥ न गुणः कोऽपि कस्यापि गुणस्यान्तर्भवः क्वचित् ॥ नाधारोऽपि च नाधेयो हेतुर्नापीह हेतुमान् ॥ १७ ॥ किन्तु सर्वोऽपि स्वात्मीयः स्वात्मीय शक्तियोगतः ॥ नानारूपा ह्यनेकेऽपि सता सम्मिलिता मिथ ॥ १८ ॥ गुणानां चाप्यनन्तत्वे वाग्व्यवहारगौरवात् ॥ गुणा. केचित्समुद्दिष्टा. प्रसिद्धा पूर्वसूरिभि ॥ १९ ॥ यत्पुन. क्वचित्कस्यापि सीमाज्ञान

मनेकधा ॥ मन पर्ययज्ञान वा तद्द्वयं भावयेत्समम् ॥ २० ॥ तत्तदावरणस्योच्चैः क्षायोपशमिकत्वतः ॥ स्यात्तथालब्धि नाज्ञात्वान्स्यादत्राप्यपरा गति ॥ २१ ॥ मतिज्ञान श्रुतज्ञा नमेतन्मात्रं सदातनम् ॥ स्याद्वा तरतमैर्भावैर्यथा हेतूपल ब्धिसात् ॥ २२ ॥ ज्ञान यथा दर्शनामस्ति ग्राहकशक्ति मत् ॥ क्षायोपशमिक तावदस्ति नौदयिक भवेत् ॥ २३ ॥ अस्ति द्वेधाऽवधिज्ञानं हेतोः कुतश्चिदन्तरात् ॥ ज्ञान स्या-त्सम्यगवधिरज्ञान कुत्सितोऽवधि ॥ २४ ॥ अस्ति द्वेधा मतिज्ञान श्रुतज्ञान च स्याद्विधा ॥ सम्यङ्मिथ्याविशे-षाभ्या ज्ञानमज्ञानमित्यपि ॥ २५ ॥ त्रिषु ज्ञानेषु चैतेषु यत्स्यादज्ञानमर्थतः ॥ क्षायोपशमिक तत्स्यान्न स्यादौदयिक क्वचित् ॥ २६ ॥ अस्ति यत्पुनरज्ञानमर्थादौदयिक स्मृतम् ॥ तदस्ति शून्यतारूप यथा निश्चेतन वपुः ॥ २७ ॥ एता-वताऽस्ति यो भावो दृङ्मोहस्योदयादपि ॥ पाकाच्चारित्र-मोहस्य सर्वोऽप्यौदयिक स हि ॥ २८ ॥ न्यायादप्येव मन्येषा मोहादिघातिकर्मणाम् ॥ यावाँस्तत्रोदयाज्जातो भावोऽस्त्यौदयिकोऽखिल ॥ २९ ॥ तत्राप्यस्ति विवेको ऽय श्रेयानत्रोदितो यथा ॥ वैकृतो मोहजा भावः शेष ...

॥ १०५० ॥ दर्शितेष्वपि तेषूच्चैर्जैनैः स्याद्वादिभि
कृदम् ॥ न स्वीकरोति तानत्र मिथ्याकर्मोदयादपि ५१
ज्ञानानन्दौ यथा स्यातां मुक्तात्मनो यदन्वयात् ॥ विनाऽ
त्यक्षशरीरेभ्यः मोक्तमस्त्यस्ति वा न वा ॥ ५२ ॥
स्वत सिद्धानि द्रव्याणि जीवादीनि किलेति षट् ॥
मोक्त जैनागमे यत्तत्स्याद्वा नेच्छेदनात्मवित् ॥ ५३ ॥
नित्यानित्यात्मकं तत्त्वमेकं चैकपदे च यत् ॥ स्याद्वा नेति
विरुद्धत्वात्संशयं कुरुते कुदृक् ॥ ४९ ॥ अप्यनात्मीयभा
वेषु यावन्नोकर्मकर्मसु ॥ अहमात्मेति बुद्धिर्या दृङ्मोहस्य
विजृम्भितम् ॥ ५० ॥ अदेवे देवबुद्धिः स्यादगुरौ गुरुधी-
रिह ॥ अधर्मे धर्मवज्ज्ञानं दृङ्मोहस्यानुशासनात् ॥ ५१ ॥
धनधान्यसुताद्यर्थं मिथ्यादेवं दुराशयः ॥ सेवेत कुत्सितं
कर्म कुर्याद्वा मोहशासनात् ॥ ५२ ॥ निःस्वेनात्र ते भावा
मोक्ता येऽपि गतिच्छज्ञात् ॥ अर्थादौदयिकास्तेऽपि मोह-
द्वैतोदयात्परम् ॥ ५३ ॥
यत्र कुत्रापि वाऽ यत्र रागांशो बुद्धिपूर्वकः ॥ स स्याद्द्वै-
विध्यमोहस्य पाकाद्वाऽन्यतमोदयात् ॥ ५४ ॥ एत्रमौद-
यिकाभावाश्चत्वारो गतिसंश्रिता ॥ केवलं बन्धकर्तारो

मोहकर्मोदयात्मका' ॥ ९५ ॥ कषायाश्चापि चत्वारो जीवस्यान्विका स्मृताः ॥ क्रोधो मानोऽथ माया च लोभश्चेति चतुष्टयात् ॥ ९६ ॥ ते चात्रोत्तरभेदैश्च नामतोऽप्यत्र षोडश ॥ पञ्चविंशतिकाश्चापि लोकासंख्यातमात्रका ॥ ९७ ॥ अथवा शक्तितोऽनन्ता कषाया कल्मषात्मका ॥ यस्मादेकैकमात्मापि मत्यनन्ताश्च शक्तयः॥ ९८॥ अस्ति जीवस्य चारित्र गुण शुद्धत्वशक्तिमान् ॥ वैकृतोऽस्ति स चारित्रमोहकर्मोदयादिह ॥ ९९ ॥ तस्माच्चारित्रमोहश्च तद्भेदाद्द्विविधो भवेत् ॥ पुद्गलो द्रव्यरूपोऽस्ति भावरूपोऽस्ति चिन्मयः ॥ १०६० ॥ अस्त्येक मूर्तिमद्द्रव्य नाम्ना ख्यात. स पुद्गल ॥ वैकृत सोऽस्ति चारित्रमोहरूपेण संस्थितः ॥ ६१ ॥ पृथ्वीपिण्डसमानः स्यान्मोह. पौद्गलिकोऽखिल ॥ पुद्गल स स्वय नात्मा मिथो बन्धो द्वयोरपि ॥ ६२ ॥ द्विविधस्यापि मोहस्य पौद्गलिकस्य कर्मणः ॥ उदयात्मनोभावो भावमोहः स उच्यते ॥ ६३ ॥ जले जम्बालवन्नूनं स भावो मलिनो भवेत् ॥ बन्धहेतु' स एव स्यात्तत्राष्टकर्मणाम् ॥ ६४ ॥ नापि यावदनर्थाना मूलमेक. स एव च ॥

यस्मादनर्थमूलाना कर्मणामादिकारणम् ॥ ६५ ॥ अ
शुचिर्घातको रौद्रो दुःख दु खफल च स ॥ किमत्र बहुनो
क्तेन सर्वासा विपदा पदम् ॥ ६६ ॥ कार्यं कारणम
प्येष मोहो भावसमाह्वय ॥ सर्वबद्धानुवादेन मत्सग्राशर-
सञ्चयात् ॥ ६७ ॥ यदोचे पूर्वबद्धस्य द्रव्यमाह
स्य कर्मण. ॥ पाकाल्लब्धात्मसर्वस्य कार्यरूपस्ततो नयात्
॥ ६८ ॥ निमित्तमात्रीकृत्योचैस्तमागच्छन्ति पुद्गला ॥
ज्ञानावृत्यादिरूपस्य तस्माद्भावोऽस्ति कारणम् ॥ ६९ ॥
विशेष. कोऽप्यय कार्यं केवल मोहकर्मणः ॥ मोहस्यास्याऽ
पि बन्धस्य कारण सर्वकर्मणाम् ॥ १०७० ॥ अस्ति
सिद्ध ततोऽ योन्य जीवपुद्गलकर्मणो. ॥ निमित्तनैमित्ति-
को भावो यथा कुम्भकुलालयो. ॥ ७१ ॥ अन्तर्द
ष्ट्या कपायाणा कर्मणा च परस्परम् ॥ निमित्तनैमित्ति
को भाव स्यान्नस्याज्जीवकर्मणो. ॥ ७२ ॥ यतस्तत्र
स्वय जीवे निमित्ते सति कर्मणाम् ॥ नित्या स्यात्कर्तृ
ता चेति न्यायान्मोक्षो न कस्यचित् ॥ ७३ ॥ इत्येव
ते कपायाख्याश्चत्वारोऽप्यौदयिका स्मृताः ॥ चारित्रस्य
गुणस्यास्य पर्याया वैकृतात्मनः ॥ ७४ ॥ लिङ्गान्यौ-

द्विनिका॰येव त्रीणि स्त्रीपुन्नपुंसकान् ।। भेदाद्वा नोकषायाणां कर्मणामुदयात्किल ॥ ७५ ॥ चारित्रमोहकर्मैतद्द्विविध परमागमात् ॥ आद्यं कषायमित्युक्तं नोकषायं द्वितीयकम् ॥ ७६ ॥ तत्रापि नोकषायाख्यं नवधा स्वविधानतः ॥ हास्योपरती शोको भीजुगुप्सेति त्रिलिङ्गकम् ॥ ७७ ॥ ततश्चारित्रमोहस्य कर्मणो ह्युदयाद्ध्रुवम् ॥ चारित्रस्य गुणस्यापि भावा वैभाविका अमी ॥ ७८ ॥ प्रत्येकं द्विविधान्येव लिंगानीह निसर्गतः ॥ द्रव्यभावविभेदाभ्यां सर्वज्ञाज्ञानतिक्रमात् । ७९ । अस्ति यन्नाम कर्मैकं नानारूपं च चित्रवत् ॥ पौद्गलिकमचिद्रूपं स्यात्पुद्गलविपाकि यत् । ८० । अङ्गोपाङ्गं शरीरं च तद्भेदौ स्तोऽप्यभेदवत्॥ तद्विपाकाच्त्रिलिङ्गानामाकाराः सम्भवन्ति च ८१ त्रिलिङ्गाकारसम्पत्तिः कार्यं तन्नामकर्मणः ॥ नास्ति तद्भावलिङ्गेषु मनागपि करिष्णुता ॥ ८२ ॥ भाववेदेषु चारित्रमोहकर्मांशकोदयः ॥ कारणं नूनमेकं स्यान्नेतरस्योदयः क्वचित् ॥ ८३ ॥ रिरंसा द्रव्यनारीणां पुंवेदस्योदयात्किल ॥ नारीवेदोदयाद्वेदः पुंसां भोगाभिलाषिता ॥ ८४ ॥ नालं भोगाय नारीणां नापि पुंसामशक्तितः ॥ अन्तर्दग्धोऽस्ति यो भावः क्लीववेदोदयादिव ॥ ८५ ॥ द्रव्यलिङ्गं यथा नाम भावलिङ्गं तथा क्वचित् ॥ क्वचिदन्यतमं द्रव्यं भावश्चान्यतमो भवेत् ॥ ८६ ॥ यथा दिविजनारीणां नारीवेदोऽस्ति नेतरः ॥ देवानां चापि

सर्वेषां पाकः पुंवेद एव हि ॥ ८९ ॥ भोगभूमौ च नारी_णां नारीवेदो न चेतरः ॥ पुंवेदः केवलः पुंसां नान्यो वाऽन्योऽप्यसम्भव ॥ ८८ ॥ नारकाणां च सर्वेषां वेदश्चैको नपुंसकः ॥ द्रव्यतो भावतश्चापि न स्त्रीवेदो न वा पुमान् ॥ ८९ ॥ तिर्यग्जातौ च सर्वेषामेकाक्षाणां नपुंसकः ॥ वेदो विकलत्रयाणां क्लीवः स्यात्केवलः किल ॥ ९० ॥ पञ्चाक्षसञ्ज्ञिनां चापि तिरश्चां स्यान्नपुंसकः ॥ द्रव्यतो भावतश्चापि वेदो नान्यः कदाचन ॥ ९१ ॥ कर्मभूमौ मनुष्याणां मानुषीणां तथैव च ॥ तिरश्चां वाऽतिरश्चां वा त्रयो वेदास्तथोदयात् ॥ ९२ ॥ केषांचिद्द्रव्यतः साङ्गः पुंवेदो भावतः पुनः ॥ स्त्रीवेदः क्लीववेदो वा पुंवेदो वा त्रिधाऽपि च ॥ ९३ ॥ केषांचित्क्लीववेदो वा द्रव्यतो भावतः पुनः ॥ पुंवेदः क्लीववेदो वा स्त्रीवेदो वा त्रिधोचितः ॥ ९४ ॥ कश्चिदापर्ययन्यायात्क्रमादस्ति त्रिवेदवान् ॥ कदाचित्क्लीववेदो वा स्त्री वा भावात्कचित्पुमान् ॥ ९५ ॥ त्रयोऽपि भाववेदास्ते नैव तर्याद चारित्रं ॥ नित्यं चाबुद्धिपूर्वाः स्युः कचिद्वै बुद्धिपूर्वकाः ॥ ९६ ॥ तेऽपि चारित्रमोहान्तर्भाविनो बन्धहेतवः ॥ संक्लेशाङ्गैकरूपत्वात्केवलं पापकर्मणाम् ॥ ९७ ॥ द्रव्यलिङ्गानि सर्वाणि नात्र बन्धस्य हेतवः ॥ देहमात्रैकवृत्तत्वे बन्धस्याकारणात्स्वतः ॥ ९८ ॥ मिथ्यादर्शनमाख्यातं पाकान्मिथ्यात्वकर्मणः ॥ भावो जीवस्य

का ॥ सामान्याख्या विशेषाख्या द्वैविध्याच्चत्रसस्य च ११
सामान्याख्या यथा कृत्स्नकर्मणामेकलक्षणात् ॥ जीवस्या-
कुलताया स्याद्धेतु पाकागतोरस ॥ १२ न चैतदप्र-
सिद्ध स्याद्दृष्टान्ताद्विषभक्षणात् ॥ दु'खस्य प्राणघातस्य
कार्य द्वैतस्य दर्शनात् ॥ १३ ॥ कर्मैकं विपक्षि स्या-
त्सुखस्यैकगुणस्य च ॥ अस्ति किञ्चिन्न कर्मैकं तद्विपक्ष
तत पृथक् ॥ १४ ॥ वेदनीय हि कर्मैकमस्ति चेत्त
द्विपक्षि च ॥ न यतोऽस्यास्त्यघातित्व मसिद्ध परमागमा-
त् ॥ १५ ॥ असयतत्वमस्यास्ति भावोऽप्यौदयिको
यत ॥ पाकाच्चारित्रमोहस्य कर्मणो लब्धजन्मवान् ॥
१६ ॥ सयम क्रियया द्वेधा न्यासाद्वादशधाऽथवा ॥
शुद्धस्वात्मोपलब्धि स्यात्सयमो निष्क्रियस्य च ॥ १७॥
पञ्चानामिन्द्रियाणा च मनसश्च निरोधनात् ॥ स्यादि'
न्द्रियनिरोधाख्य: सयम प्रथमो मत ॥ १८ ॥
स्थावराणा च पञ्चाना त्रसस्यापि च रक्षणात् ॥ त्रस
सरक्षणाख्य स्याद्द्वितीय प्राणसयम ॥ १९ ॥
ननु किं न निरोधित्वमक्षणा मनसस्तथा ॥ सरक्षण च
किंनाम स्थावराणा त्रसस्य च ॥ २० सत्यमक्षार्थस
म्बन्धाज्ज्ञान नासयमाय यत् तत्र रागादिबुद्धिर्या सँयम
स्तन्निरोधनम् ॥ २१ ॥ तत्र स्यात्त्रजीवाना न व
धायोद्यत मनः ॥ न वचो न वपु' क्वापि प्राणिसरक्षण
स्मृतम् ॥ २२ ॥ इत्युक्तलक्षणो यत्र सँयमो नापिले-



नमः सिद्धेभ्यः

# ॥ पञ्चाध्यायी ॥

पञ्चाध्यायावयवं मम कर्तुर्ग्रन्थराजमात्मवशात् ॥
अर्थालोकनिदानं यस्य वचस्तं स्तुवे महावीरम् ॥ १ ॥
शेषानपि तीर्थकराननन्तसिद्धानहं नमामि समम् ॥
धर्माचार्याध्यापकसाधुविशिष्टान्मुनीश्वरान्वन्दे ॥ २ ॥
जीयाज्जैनं शासनमनादिनिधनं सुवन्द्यमनवद्यम् ॥
यदपि च कुमतारातीनदयं धूमध्वजोपमं दहति ॥ ३ ॥
इति वन्दितपञ्चगुरुः कृतमङ्गलसत्क्रियः स एष पुनः ॥
नाम्ना पञ्चाध्यायीं प्रतिजानीते चिकीर्षितं शास्त्रम् ॥४॥
अत्रान्तरङ्गहेतुर्यद्यपि भावः कवेर्विशुद्धतरः ॥
हेतोस्तथापि हेतुः साध्वी सर्वोपकारिणी बुद्धिः ॥ ५ ॥
सर्वोऽपि जीवलोकः श्रोतुंकामो वृषं हि सुगमोक्त्या ॥